लम्बकर्ण भट्ट तन्त्रविद्या संस्था ग्रन्थमाला-२

# तन्त्राह्निकम्

ग्रन्थकार:

माधवप्रसाद लामिछाने

लम्बकर्ण भट्ट तन्त्रविद्या संस्था ग्रन्थमाला-२

# तन्त्राह्निकम्

माधवप्रसाद लामिछाने

उपप्राध्यापकः, वाल्मीकि विद्यापीठम्

प्रदर्शनीमार्गः, काष्ठमण्डपः ।

प्रकाशकः

लम्बकर्ण भट्ट तन्त्रविद्या संस्था, काष्ठमण्डपः

## प्रकाशकीय

यस संस्थाको द्वितीय पुष्पका रूपमा **तन्त्राह्निकम्** नामक पुस्तक प्रकाशन गर्न पाउँदा हामीलाई खुसी लागेको छ । तान्त्रिक वाङ्मयका विभिन्न प्राचीन हस्तलिखित ग्रन्थहरू तथा तत्सम्बद्ध मौलिक ग्रन्थहरूको सम्पादन एवं प्रकाशन गर्ने संस्थाको उद्देश्य बमोजिम प्रथम पुष्पका रूपमा मल्लकालका प्रसिद्ध तन्त्रसाधक नवमीसिंहद्वारा परिमार्जित सप्तशती चण्डी तथा उनैले रचना गरेको चण्डीभक्तिविनोदिनीको प्रकाशनसँगै प्रस्तुत पुस्तक पाठक समक्ष ल्याएका छौं । विभिन्न तन्त्र तथा आगमग्रन्थहरूको आधार लिई रचना गरिएको यस पुस्तकले तान्त्रिक विधिअनुसार सम्पन्न गरिने नित्यकर्म प्रयोगलाई समेटेको छ । सरल संस्कृत भाषामा लिपिबद्ध प्रस्तुत पुस्तक संस्कृत भाषाको सामान्य ज्ञान भएका पाठकका लागि पनि बोधगम्य बनेको छ र तन्त्रसाधकहरूका लागि विशेष लाभप्रद हुने विश्वास लिइएको छ । धन्यवाद !

# पुरोवाक्

श्रुतिर्द्विविधा वैदिकी तान्त्रिकी चेति श्रीकुल्लुकभट्टवचनात् तन्त्रस्य श्रुतित्वमवगम्यते । वेदस्य परमात्मप्रणीतत्वमिव तन्त्रस्यापि शिवमुखोद्भाषितत्वमिति द्वयोरेव साम्यम् । निगमागमपदसूचिताभ्यां वेदतन्त्राभ्यां हिन्दुसनातनाध्यात्मिकरथः प्रचलत्यत्र नास्ति विवादः । इमं तथ्यं सुविचार्य मया तन्त्रागमानाधृत्य तान्त्रिकाचारशीलानां कृते तन्त्राह्निकम् इति नाम्ना नित्यकर्मप्रयोगविधिः प्रस्तुतः । अतस्तेषां कृते ग्रन्थोऽयं रुचिकरः सुखकरश्च भूयादिति आशासे ।

प्रा. विद्यानाथोपाध्यायभट्टमहोदयैर्याः सोपयोगाः सविशेषाः सूचनाः कृतास्तासां समावेशोऽत्र कृतः । ग्रन्थस्य शोधनसमयेऽनवधानाद् दृग्दोषाद्वा स्थलविशेषे क्वचिद्दोषा यदि दृक्पथमापतेयुस्तदा सदयहृदयैर्विद्वद्भिरयं ग्रन्थः संशोध्य सङ्ग्रहणीयः ।

यदत्र किञ्चित् स्खलितं प्रमादेन भ्रमेण वा ।
तन्त्रज्ञास्तच्छोधयन्तु कस्य न स्खलितं मनः ॥

भाद्रशुक्लचतुर्दश्यां, श्रीगुह्येश्वरीभट्टारिकापादानुगृहीतः
२०७० मित विक्रमाब्दे, माधवप्रसादलामिछाने
नवक्वट्टजनपदस्थः

# पुरोवाक्

श्रुतिर्द्विविधा वैदिकी तान्त्रिकी चेति श्रीकुल्लुकभट्टवचनात् तन्त्रस्य श्रुतित्वमवगम्यते । वेदस्य परमात्मप्रणीतत्वमिव तन्त्रस्यापि शिवमुखोद्भाषितत्वमिति द्वयोरेव साम्यम् । निगमागमपदसूचिताभ्यां वेदतन्त्राभ्यां हिन्दुसनातनाध्यात्मिकरथः प्रचलत्यत्र नास्ति विवादः । इमं तथ्यं सुविचार्य मया तन्त्रागमानाधृत्य तान्त्रिकाचारशीलानां कृते तन्त्राह्निकम् इति नाम्ना नित्यकर्मप्रयोगविधिः प्रस्तुतः । अतस्तेषां कृते ग्रन्थोऽयं रुचिकरः सुखकरश्च भूयादिति आशासे ।

प्रा. विद्यानाथोपाध्यायभट्टमहोदयैर्याः सोपयोगाः सविशेषाः सूचनाः कृतास्तासां समावेशोऽत्र कृतः । ग्रन्थस्य शोधनसमयेऽनवधानाद् दृग्दोषाद्वा स्थलविशेषे क्वचिद्दोषा यदि दृक्पथमापतेयुस्तदा सदयहृदयैर्विद्वद्भिरयं ग्रन्थः संशोध्य सङ्ग्रहणीयः ।

यदत्र किञ्चित् स्खलितं प्रमादेन भ्रमेण वा ।
तन्त्रज्ञास्तच्छोधयन्तु कस्य न स्खलितं मनः ॥

भाद्रशुक्लचतुर्दश्यां, श्रीगुह्येश्वरीभट्टारिकापादानुगृहीतः
२०७० मित विक्रमाब्दे, माधवप्रसादलामिछाने
नवक्वट्टजनपदस्थः

# विषयसूची

श्री गणेशाय नमः । ॐ तन्त्रायिणे नमः ।

अथ तन्त्राह्निकं प्रारभ्यते ।

## मङ्गलाचरणम्

नमो गुरूभ्यां स्थानेश्वरदिवाकराभ्याम् ।
नमः परमगुरवे व्रजवल्लभाय ॥
विद्यानाथाय च नमो जगद्धेतवे भवाय ।
वागीश्वरीं गणपतिं वन्दे स्वपितरावहम् ॥

गोत्रे गर्गमुनेस्तु पञ्चप्रवरे माध्यन्दिनो निर्मलो ।
विष्णुकान्तसुतो मनोरथ इति स्वाचारनिष्ठः सदा ॥
तस्यायं तनयस्तृतीय इह यो दुर्गार्चको माधवः ।
सन्नित्याह्निकतान्त्रिकं वितनुते आधृत्य तन्त्रागमान् ॥

**अथ जागरणम् ॥** ब्राह्ममुहूर्ते शयनाद्दक्षिणाङ्गेन उत्थाय[1] प्रथमं स्वकरतलं पश्येत् –

करा‍ग्रे वसते लक्ष्मी करमध्ये सरस्वती ।
करमूले स्थिता ब्राह्मी प्रभाते करदर्शनम् ॥

ततो भूमौ पादस्थापनपूर्वं पादस्पर्शदोषनिवारणार्थं पृथ्वीम् अभिवादयन् क्षमायाचनं कुर्यात् –

---

१ उत्थाय दक्षिणाङ्गेन वामपादं न्यसेद् भुवि । (मेरुतन्त्रम्)

समुद्रमेखले देवी पर्वतस्तनमण्डले ।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे[२] ॥

ततः प्रथमं वामपादं भूमौ धारयेत्[३] ।

**अथ शौचम् ॥** 'फट्' इत्यस्त्रमन्त्रमुच्चरन् शौचालयं गच्छेत्। ततो ऋषयः, देवाः, गन्धर्वाः,यक्षराक्षसाः शौचस्थानाद्दूरङ्गता इति प्रकल्पयन् अधोलिखितं श्लोकमुच्चरेत् -

उत्तिष्ठन्त्वृषयो देवा गन्धर्वा यक्षराक्षसाः ।
परितस्त्यजतां स्थानं विण्मूत्रोत्सर्जनाय मे[४] ॥

ततो वस्त्रेण शिर आच्छाद्य मलमूत्रं विसर्जयेत् । शौचानन्तरं लिङ्गं, गुदस्थानं, हस्तौ, पादौ च सम्यक् प्रक्षाल्य गण्डूषं कृत्वा आचमेत् । तद्यथा -

ह्रीँ आत्मतत्त्वाय स्वाहा,
ह्रीँ विद्यातत्त्वाय स्वाहा,
ह्रीँ शिवतत्त्वाय स्वाहा,
ह्रीँ सर्वतत्त्वाय स्वाहा इति हस्तं प्रक्षालयेत् ।

**अथ दन्तधावनम् ॥** अधोलिखितश्लोकेन दन्तकाष्ठं दन्तधावनसामग्रीं वा गृह्णीयात् -

आयुर्बलं यशो वर्चः प्रजा पशुवसूनि च ।

---

२ मेरुतन्त्रम् ।
३ पूर्ववत् ।
४ पूर्ववत् ।

ब्रह्मप्रज्ञां च मेधां च तन्नो धेहि वनस्पते[५] ॥

ततोऽधोलिखितमन्त्रेण दन्तधावनं कुर्यात् -

क्लीं कामदेवाय सर्वजनप्रियाय नमः ।

ततो गण्डूषं कृत्वा मुखं सम्यक् प्रक्षाल्य आचमेत् । तदनन्तरं रात्रिवासं परित्यज्य शुद्धवस्त्रं परिधाय पुनराचमेत् ।

**अथ मन्त्रस्नानम् ॥** शुद्धासने प्राङ्मुख उदङ्मुखो वा भूत्वा पद्मासनेनोपविश्य मूलमन्त्रेण[६] प्राणायामं विधाय मन्त्रमन्त्रिणोरैक्यं भावयन् गङ्गायमुनासरस्वतीरूपाणां इडापिङ्गलासुषुम्णानाडीनां सङ्गमे मनसा स्नानमाचरेत् ।

**अथ गुरोर्मानसपूजनम् ॥** स्ववामाङ्के रक्तवर्णां, रक्तवस्त्रयुतां, रक्तमालाविभूषितां, रक्तचन्दनालङ्कृतां स्वशक्तिं स्थापयन्तं श्वेतवस्त्रयुतं, श्वेतमालाविभूषितं, श्वेतचन्दनालङ्कृतं, प्रसन्नवदनं, वराभयमुद्रायुतं, रागद्वेषादिशून्यं, करुणविग्रहं शिवरूपं गुरुं स्वमस्तकस्थिते सहस्रारचक्रे ध्यात्वा मानसोपचारेण तं पूजयेत् । तच्च यथा -

ॐ पृथिवीतत्त्वरूपं गन्धं समर्पयामि शिवस्वरूपाय गुरवे नमः -गन्धम्,

ॐ आकाशतत्त्वरूपं पुष्पं समर्पयामि शिवस्वरूपाय गुरवे नमः -पुष्पम्,

---

५ महाकालसंहिता गुह्यकालीखण्डः, ६।७ ॥

६ सम्प्रदायक्रमेण दीक्षापूर्वकं गुरोः प्राप्तं मन्त्रं मूलमन्त्रं कथ्यते ।

ॐ वायुतत्त्वरूपं धूपं समर्पयामि शिवस्वरूपाय गुरवे नमः -धूपम्,

ॐ तेजस्तत्त्वरूपं दीपं समर्पयामि शिवरूपाय गुरवे नमः -दीपम्,

ॐ अमृततत्त्वरूपं नैवेद्यं समर्पयामि शिवरूपाय गुरवे नमः -नैवेद्यम् ।

ततो यथाशक्तिः 'ऐँ' बीजं प्रजप्य तज्जपं गुरोर्दक्षिणहस्ते समर्पयेत् । तदनन्तरं गुरोर्गुरुपत्न्याश्च पादुकां मनसा समभ्यर्च्य गुरुं प्रार्थयेत् -

भवपापविनाशाय ज्ञानदृष्टिप्रदर्शिने ।
नमः सद्गुरवे तुभ्यं भुक्तिमुक्तिप्रदायिने ॥
नराकृतिपरब्रह्मरूपायाऽज्ञानहारिणे ।
कुलधर्मप्रकाशाय तस्मै श्रीगुरवे नमः[७]॥

अथ इष्टदेव्या मानसपूजनम् ॥ सहस्रारचक्रे स्वेष्टदेवीं ध्यात्वा मानसोपचारेण तां पूजयेत् ।

तद्यथा -

ॐ पृथिवीतत्त्वरूपं गन्धं समर्पयामि अमुकदेव्यै नमः - गन्धम्,

ॐ आकाशतत्त्वरूपं पुष्पं समर्पयामि अमुकदेव्यै नमः -पुष्पम्,

---

७ महानिर्वाणतन्त्रम्, पञ्चमोल्लासः, ३१-३२ श्लोकौ ॥

ॐ वायुतत्त्वरूपं धूपं समर्पयामि अमुकदेव्यै नमः - धूपम्,

ॐ तेजस्तत्त्वरूपं दीपं समर्पयामि अमुकदेव्यै नमः -दीपम्,

ॐ अमृततत्त्वरूपं नैवेद्यं समर्पयामि अमुकदेव्यै नमः -नैवेद्यम् ।

ततो मूलमन्त्रं यथाशक्तिः प्रजप्य तज्जपं देव्या वामकरे समर्पयेत् । तदनन्तरं इष्टदेवीं शङ्करं च श्रद्धाभक्तिपूर्वकं प्रार्थयेत् -

नमः सर्वस्वरूपिण्यै जगद्धात्र्यै नमो नमः ।
आद्यायै कालिकायै ते कर्त्र्यै हर्त्र्यै नमो नमः[८] ॥

त्रैलोक्यचैतन्यमयादिदेव
श्रीशङ्कर त्वच्चरणाज्ञयैव ।
प्रातः समुत्थाय तव प्रियार्थं
संसारयात्रामनुवर्तयिष्ये ॥
संसारयात्रामनुवर्तमानं
त्वदाज्ञया शङ्करदेवदेव ।
स्पर्धातिरस्कारकलिप्रमादा-
भयानि मां माभिभवन्तु नाथ[९] ॥

---

८ पूर्ववत् ५।३५॥

९ मेरुतन्त्रम् ।

**अथ अजपाजपः**[१०]॥ तत्र प्रथमम् अजपाजपसङ्कल्पं कुर्यात्।

तद्यथा -

ॐ तत्सत् ॐ तत्सत् ॐ तत्सत् ॐ विष्णुर्विष्णुर्विष्णुअद्यब्रह्मणोऽह्नि द्वितीयपरार्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरेऽष्टाविंशतितमे कलियुगे कलियुगस्य प्रथमचरणे जम्बुद्वीपे भरतखण्डे भारतवर्षे नेपालदेशे वासुकिक्षेत्रे अमुकदेवीदेवतायाः सन्निधौ अमुकस्थाने अमुकसंवत्सरे अमुकऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अद्य प्रातःकाले अमुकगोत्र अमुकशर्मा/वर्मा/गुप्त/दासोऽहं अद्यतनसूर्योदयादारभ्य श्वस्तनसूर्योदयपर्यन्तं उच्छ्वासनिःश्वासाभ्यां हंससोऽहंरूपाभ्यां गणेशब्रह्मविष्णुमहेशजीवात्मगुरुपरमात्मप्रीत्यर्थं षट्शताधिकैकविंशतिसहस्रसंख्याकम् अजपानाम गायत्रीजपं करिष्ये।

ततो मूलाधारचक्रे गणेशं ध्यायेत्।

ध्यानं यथा -

वशषसदलयुक्ते सम्यगाधारपद्मे
तरुणमरुणगात्रं वारणास्यं त्रिनेत्रम्॥
अभयवरदहस्तं चारुपाशाङ्कुशोद्यत्
कररुचिरसमन्यं चिन्तयेदादिमूर्तिम्[११]॥

एवं ध्यात्वा तं मानसोपचारेण पूजयित्वा तस्मै

१० न जप्यते नोच्चार्यते अपितु श्वासप्रश्वासयोर्गमनागमनाभ्यां सम्पद्यत इति अजपा। (शब्दकल्पद्रुम)

११ बृहत् पुरश्चर्यार्णवः (द्वितीयखण्डे) उद्धृतम्, पृ.२०५।

षट्शतसंख्याकमजपाजपं समर्पयेत्–

श्रीऋद्धिसिद्धिशक्तिसहिताय गणेशाय नमः
षट्शतसंख्याकमजपाजपमहं निवेदयामि ।

ततः स्वाधिष्ठानचक्रे ब्रह्माणं ध्यायेत् । ध्यानं यथा -

वभमयरलसंज्ञैरक्षरैः क्लृप्तपद्मे
सुरुचिरमुपदिष्टे पङ्कजैः सन्निधानम् ।
अभयवरदहस्तं कुण्डिकां चाक्षमालां
दधतममलमूर्तिं चिन्तयेद्विश्वयोनिम्[१२]॥

ततो मानसोपचारेण तं पूजयित्वा तस्मै षट्सहस्रसंख्याकमजपाजपं समर्पयेत्–

श्रीसरस्वतीशक्तिसहिताय ब्रह्मणे नमः
षट्सहस्रसंख्याकमजपाजपं निवेदयामि ।

ततो मणिपूरचक्रे विष्णुं ध्यायेत् । ध्यानं यथा -

डाद्यैः फान्तगतैः प्रकल्पितदले पद्मे निविष्टं हरिं
मार्तण्डद्युतिमादिपुरुषं नारायणं चिन्मयम् ।
हस्तन्यस्तगदारिशङ्खकमलं पीताम्बरं कौस्तुभं
श्रीवत्साङ्कितमिन्द्रनीलसदृशं ध्यायेज्जगन्मोहनम्[१३]॥

एवं विष्णुं ध्यात्वा तस्मै षट्सहस्रसंख्याकमजपाजपं समर्पयेत्–

---

१२ पूर्ववत्, पृ. २०६ ।

१३ पूर्ववत् ।

श्रीलक्ष्मीशक्तिसहिताय विष्णवे नमः

षट्सहस्रसंख्याकमजपाजपमहं निवेदयामि ।

तत अनाहतचक्रे महेशं ध्यायेत् ।

ध्यानं यथा -

काद्यैष्ठान्तगतैः प्रकल्पितदले पङ्केरुहे पार्वती-

कान्तं पूर्णशशाङ्ककोटिसदृशं प्रख्यं कपर्दोज्वलम् ।

शान्तं टङ्कमृगाभयस्पदकरं नागादिभूषोज्वलं

ग्रैवेयाङ्गदहारकुण्डलधरं चर्माम्बरं चिन्तयेत्[१४]॥

एवं ध्यात्वा मानसोपचारेण तं पूजयित्वा तस्मै षट्सहस्रसंख्याकमजपाजपं समर्पयेत् -

श्रीपार्वतीशक्तिसहिताय महेश्वराय नमः

षट्सहस्रसंख्याकमजपाजपमहं निवेदयामि ।

ततो विशुद्धिचक्रे जीवात्मानं ध्यायेत् । ध्यानं यथा -

मूर्त्यङ्गेषु निविष्टमङ्गरहितं शान्तं रुचा भासुरम्

व्याप्ताशेषचराचरं गुणमयं भावेन सच्चिन्मयम् ।

मूर्तामूर्तममूर्तमेकममलं ज्योतिप्रदीपोपमं

साक्षात्षोडशपत्रवर्णकमले जीवं परं चिन्तयेत्[१५]॥

एवं ध्यात्वा मानसोपचारेण तं पूजयित्वा तस्मै सहस्रसंख्याकमजपाजपं समर्पयेत्-

---

१४ पूर्ववत् ।

१५ पूर्ववत् ।

श्रीअविद्याशक्तिसहिताय जीवात्मने नमः

सहस्रसंख्याकमजपाजपमहं निवेदयामि ।

तत आज्ञाचक्रे गुरुं ध्यायेत् । ध्यानं यथा –

हक्षार्णद्वयचारुपत्रकमले दिव्ये जगत्कारणे

विश्वोत्तीर्णमनेकदेहनिलयं स्वच्छन्दमात्मेच्छया ।

तत्तद्योग्यतया स्वदेशिकतनुं भावैकसच्चिन्मयं

प्रत्यक्षाक्षरविग्रहं गुरुवरं ध्यायेत् परं दैवतम्[१६] ॥

एवं ध्यात्वा तं च मानसोपचारेण पूजयित्वा तस्मै सहस्रसंख्याकमजपाजपं समर्पयेत्–

श्रीपरापरज्ञानशक्तिसहिताय गुरवे नमः

सहस्रसंख्यामकमजपाजपमहं निवेदयामि ।

ततः सहस्रारचक्रे परमात्मानं ध्यायेत् ।

ध्यानं यथा –

विश्वव्यापिनमादिदेवममलं नित्यं परं निष्कलं

नित्योद्बुद्धसहस्रपत्रकमले लिप्यक्षरैर्मण्डिते ।

नित्यानन्दमनन्तपूर्णपरचित्सत्तास्फुरत्तात्मकं

स्मृत्वात्मानमनुप्रविश्य कुहरे स्वच्छन्दतः सर्वतः[१७] ॥

एवं ध्यात्वा तं च मानसोपचारेण पूजयित्वा तस्मै सहस्रसंख्याकमजपाजपं समर्पयेत्–

---

१६ पूर्ववत्, पृ. २०७ ।

१७ पूर्ववत् ।

श्रीविद्याशक्तिसहिताय सूर्यकोटिप्रकाशाय
चन्द्रकोटिसुशीतलाय परमात्मने नमः
सहस्रसंख्याकमजपाजपमहं निवेदयामि ।

**अथ स्नानम् ॥** फट् इत्यस्त्रमन्त्रेण पवित्रस्थानात् कीटाणुरहितं मृद् गोमयं वा गृहीत्वा[१८] अस्त्रमन्त्रेणैव अभिषिञ्च्य मूलमन्त्रेण त्रिवारं अभिमन्त्य मस्तकाच्चरणपर्यन्तं लेपयित्वा जलं प्रणमेत् -

आधारः सर्वभूतस्य विष्णोरतुलतेजसः ।
तद्रूपाश्च ततो जातास्ता आपः प्रणमाम्यहम्[१९] ॥

ततो जले प्रविश्य सम्मुखीकरणमुद्रां बद्ध्वा प्राणान् आयाम्य जले निमज्जयेत् । ततो नाभिपर्यन्तं जले स्थित्वा आचम्य स्नानसङ्कल्पं कुर्यात् । तद्यथा-

ॐ तत्सत् ॐ तत्सत् ॐ तत्सत् ॐ विष्णुर्विष्णुर्विष्णु अद्य ब्रह्मणोऽह्नि द्वितीयपरार्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरेऽष्टाविंशतितमे कलियुगे कलियुगस्य प्रथमचरणे जम्बुद्वीपे भरतखण्डे भारतवर्षे नेपालदेशे वासुकिक्षेत्रे अमुकदेवीदेवतायाः सन्निधौ अमुकस्थाने अमुकसंवत्सरे अमुकऋतौ अमुकमासे

---

१८ कीटाणुरहितं मृद् गोमयं वा नोपलभ्यते चेत् स्नानार्थं यद्रोच्यते तस्यैव प्रयोगो विधातव्यः ।

१९ मेरुतन्त्रम् ।

अमुकपक्षे अमुकतिथौ अद्य प्रातःकाले अमुकगोत्र अमुकशर्मा/वर्मा/गुप्त/दासोऽहं अद्य श्रीभगवतीप्रीत्यर्थं प्रातः स्नानं करिष्ये ।

ततो मूलमन्त्रेण त्रिधा प्राणायामं कृत्वा षडङ्गन्यासं कुर्यात् । तद्यथा -

हाँ हृदयाय नमः, हीँ शिरसे स्वाहा,
हुँ शिखायै वौषट्, हैँ कवचाय हुम्,
हौँ नेत्रत्रयाय वौषट्, हँ अस्त्राय फट् ।

अथवा मूलमन्त्रेण कुर्यात् ।

ततो जले मन्त्रगर्भकुलयन्त्रं लिखित्वा तज्जलं तेजोरूपं ध्यात्वा सूर्यं प्रार्थयेत् -

ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे ।
तेन सत्येन देवेश तीर्थं देहि दिवाकरः[२०] ॥

ततः क्रोंबीजमुच्चरन् अङ्कुशमुद्रां प्रदर्शयित्वा तज्जले तीर्थान्यावाहयेत् -

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु[२१]॥

ततः तज्जले द्वादशवारं मूलमन्त्रं प्रजप्य मानसोपचारेण सूर्यं पूजयित्वा कुलमन्त्रसम्बद्धं तज्जलं त्रिधा सूर्याय

---

२० मेरुतन्त्रम् ।

२१ मेरुतन्त्रम् ।

दद्यात्। तेनैव जलेन स्वशिरसि त्रिधा अभिषिञ्च्य सप्तच्छिद्राणि कर्णनेत्रनासामुखविवराणि हस्तद्वयाङ्गुलिभिर्रोधयेत् । ततो जले त्रिवारं निमज्जयेत् । तदनन्तरं जलाद्बहिरागत्य शरीरं प्रोक्ष्य शुद्धं धौतवस्त्रं परिधापयेत् ।

**अथ तिलककरणम्**[२२] ॥ गायत्रीमन्त्रेण मूलमन्त्रेण वा शिखां बद्ध्वा मृदा, भस्मना, केशरेण वा कस्तुर्या ललाटे तिलकं कुर्यात् ।

**अथ सन्ध्या ॥** तत्र द्विजस्तु वैदिकीं सन्ध्यां विधायैव तान्त्रिकीं सन्ध्यां कुर्यात्, शूद्रस्तु तान्त्रिकीमेवाचरेत् । तद्यथा -

मूलमन्त्रेण त्रिराचम्य तेनैव प्राणायामत्रयं कृत्वा पूर्ववत् तीर्थान्यावाह्य जले द्वादशवारं मूलमन्त्रं जपेत् । मूलमन्त्रमुच्चरन् मध्यमाऽनामिकाभ्यां त्रिवारं जलं भूमौ प्रक्षिपेत् । मूलमन्त्रोच्चारणपूर्वकं ताभ्यामेवाङ्गुष्ठाभ्यां सप्तवारं तज्जलं स्वशिरसि अभिषिञ्च्य वामहस्ते जलं

---

२२ तत्र वैष्णवानां ऊर्ध्वपुण्ड्रं, शैवानां त्रिपुण्ड्रं, गाणपत्यानां अर्धचन्द्रं शाक्तानां तु वर्तुलं तिलकं कथितम् । उक्तञ्च-
वैष्णवस्योर्ध्वपुण्ड्रं स्यात् त्रिपुण्ड्रं शिवसेवितुः ।
अर्धचन्द्रो गणेशस्य देवीभक्तस्य वर्तुलम् । (मेरुतन्त्रम्)
तथा ऊर्ध्वपुण्ड्रं मृदा, त्रिपुण्ड्रं भस्मना, अर्धचन्द्रं वर्तुलञ्च केशरेण कस्तुर्या वा कर्तव्यम् । तदुक्तं मेरुतन्त्रे -
ऊर्ध्वपुण्ड्रं मृदा कुर्यात् त्रिपुण्ड्रं चापि भस्मना ।
केशरेण च कस्तुर्या शेषे शीतं यथारुचिः ॥

गृहीत्वा दक्षिणहस्तेन आच्छाद्य हँ यँ वँ रँ लँ एतानि पञ्चबीजानि चतुर्वारं प्रजप्य तज्जलं दक्षिणहस्ते गृहीत्वा तं तेजोमयरूपं ध्यात्वा वामनासापुटेन जलं प्रविश्य दक्षिणनासापुटेन वहिः क्षिपेत्। तत्क्रमे शरीरस्थं पापं बहिर्निष्कासितमिति भावयेत्। ततः स्वाग्रे वामभागे वज्रशीलां प्रकल्प्य फट् इति मन्त्रेण तं च पापं तस्यां शिलायां त्रिवारं ताडयेत्।

ततो हस्तौ प्रक्षाल्य मूलमन्त्रेण आचमनं कृत्वा सूर्यार्घ्यं दद्यात् –

ह्रीं हंस घृणिसूर्य इदमर्घ्यं तुभ्यं स्वाहा।

ततो मूलमन्त्रेण रविमण्डलस्थां स्वेष्टदेवीं त्रिधा तर्पयेत् –

ह्रीं अमुकदेवीं तर्पयामि नमः।

ततो गायत्रीं ध्यायेत्[२३]। गायत्रीं ध्यात्वा तां अञ्जुलीत्रयं जलं

---

२३ परब्रह्मस्वरूपिणी गायत्री प्रातर्मध्याह्नसायाह्ने गुणभेदतः त्रिरूपा भवति। तदुक्तं महानिर्वाणतन्त्रे –

प्रातर्ब्राह्मीं रक्तवर्णां द्विभुजाञ्च कुमारिकाम्।
कमण्डलुं तीर्थपूर्णमच्छमालाञ्च विभ्रतीम्॥
कृष्णाजिनाम्बरधरां हंसारूढां शुचिस्मिताम्।
मध्याह्ने तां श्यामवर्णां वैष्णवीञ्च चतुर्भुजाम्॥
शङ्खचक्रगदापद्मधारिणीं गडासनाम्।
पीनोत्तुङ्गकुचद्वन्द्वां वनमालाविभूषिताम्॥
युवतीं सततं ध्यायेन्मध्ये मार्त्तण्डमण्डले॥
सायाह्ने वरदां देवीं गायत्रीं संस्मरेद् यतिः।

दत्वा दशवारं शतवारं वा इष्टदेव्या गायत्रीं जपेत् । जपस्यान्ते स्तुतिनमनपूर्वकं तज्जपफलं इष्टदेव्यै समर्प्य सूर्यमण्डले कल्पितां तां स्वहृदये स्थापयेत् ।

**अथ देवर्षिपितृतर्पणम् ।।** तत्र द्विजस्तु प्रथमं वैदिकविधिना तर्पणं कृत्वैव पुनः तान्त्रिकतर्पणं कुर्यात् । तच्च यथा -

मूलमन्त्रेण प्राणायामत्रयं कृत्वा ऋषिन्यासं कुर्यात् । तद्यथा -

ब्रह्मणे ऋषये नमः - शिरसि,
गायत्र्यै छन्दसे नमः -मुखे,
मातृकायै सरस्वत्यै देव्यै नमः - हृदये,
व्यञ्जनाय बीजाय नमः - गुह्ये,
स्वरेभ्यः शक्तिभ्यो नमः - पादयोः,
विसर्गाय कीलकाय नमः -सर्वाङ्गे ।

तत आपादमस्तकान्तं पुनरामस्तकपादपर्यन्तं प्रतिहस्ताभ्यां मूलमन्त्रेण सप्तधा त्रिधा वा व्यापकन्यासं कुर्यात् । तदनन्तरं कराङ्गन्यासं कुर्यात् । तद्यथा -

हाँ अङ्गुष्ठाभ्यां नमः, हीँ तर्जनीभ्यां स्वाहा,
हूँ मध्यमाभ्यां वषट्, हैँ अनामिकाभ्यां नमः,

---

शुक्लां शुक्लाम्बरधरां वृषासनकृताश्रयाम् ॥
त्रिनेत्रां वरदां पाशं शूलञ्च कृकरोटिकाम् ।
बिभ्रतीं करपद्मैश्च वृद्धां गलितयौवननाम् ॥ महानिर्वाणतन्त्रम् पञ्चमोल्लासः, ५६-६० श्लोकाः ॥

ह्रौँ कनिष्ठाभ्यां वौषट्, ह्रः करतलकरपृष्ठाभ्यां फट् ।

अथवा मूलमन्त्रेण कुर्यात् ।

ततः षडङ्गन्यासं कुर्यात् । तद्यथा –

ह्राँ हृदयाय नमः,ह्रीँ शिरसे स्वाहा,

ह्रुँ शिखायै वौषट्, ह्रैँ कवचाय हुम्,

ह्रौँ नेत्रत्रयाय वौषट्, ह्रँ अस्त्राय फट् ।

अथवा मूलमन्त्रेण कुर्यात् ।

ततो जले धेनुमुद्रां प्रदर्श्य वँबीजेन तज्जलममृतीकृत्य साङ्गां सावरणां इष्टदेवीं ध्यायेत् । पुनस्तां अष्टोत्तरशतं तदर्धं वा तर्पयेत् –

(अत्र मूलमन्त्रं संयोज्यम्) अमुकं तर्पयामि नमः ।

ततस्तदावरणदेवान् एकैकवारं सन्तर्प्य इष्टदेवीं स्वहृदि स्थापयेत्, तीर्थान् सूर्ये विसर्जयेत् । तदनन्तरं इष्टदेव्यै अर्घ्यं दत्वा यथाशक्तिर्मूलमन्त्रं प्रजप्य तज्जपफलं देव्या वामकरे समर्पयेत् ।

**अथ सामान्यार्घ्यविधिः ।।** पूजार्थं जलमादाय तीर्थं नत्वा स्तोत्रं पठन् देवताध्यानतत्परः सन् यजनगृहमागत्य पाणिपादौ विशोध्य आसने उपविश्य आचमनप्राणायामौ विधाय द्वारस्याग्रे सामान्यार्घ्यं प्रकल्पयेत् । तत्र प्रथमं त्रिकोणवृत्तचतुरस्रमण्डलं विलिखेत् । तच्च यथा –

ततस्तस्मिन् मण्डले आधारशक्तिं पूजयेत् -

हीँ आधारशक्तये नमः ।

ततोऽर्घ्यपात्रस्थापनाय कमप्याधारं स्थापयेत् । 'फट्' इति मन्त्रेण आधारपात्रं प्रक्षाल्य तं च आधारे संस्थाप्य नम इति हृन्मन्त्रेण तत्र जलं प्रपूरयेत् । जलं पूरयित्वा तज्जले चन्दनपुष्पादिकं निक्षिप्य तत्र क्रोंबीजमुच्चरन् अङ्कुशमुद्राप्रदर्शनपूर्वकं सूर्यमण्डलात् तीर्थान्यावाहयेत् -

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु ॥

ततो गन्धपुष्पादिभिः क्रमेण आधारं,अर्घ्यपात्रं, जलं पूजयेत् । तद्यथा -

रँ दशकलात्मने वह्निमण्डलाय नमः - आधारम्,
अँ द्वादशकलात्मने सूर्यमण्डलाय नमः - अर्घ्यपात्रम्,
सँ षोडशकलात्मने सोममण्डलाय नमः - जलम् ।

एवं पूजयित्वा ह्रींबीजेन तज्जलं दशवारं अभिमन्त्रयेत् ।
तदनन्तरमर्घ्यपात्रोपरि धेनुमुद्रां योनिमुद्रां च प्रदर्शयेत् ।

**अथ द्वारदेवतापूजनम् ।।** तत्र प्रथमं 'फट्' इति मन्त्रेण द्वारमभ्युक्ष्य अभिमन्त्रितजलेन गन्धपुष्पादिभिश्च द्वारपूजां कुर्यात्। तद्यथा -

अँ विघ्नेशाय नमः - द्वारस्योर्ध्वोदुम्बरे,

मँ महालक्ष्म्यै नमः - तद्दक्षिणे,

सँ सरस्वत्यै नमः - तद्वामे,

द्वारश्रियै नमः - मध्ये।

ततो द्वारस्य दक्षिणशाखायां वामशाखायां च ऊर्ध्वभागादारभ्य तलपर्यन्तं द्वारदेवताः पूजयेत्। तद्यथा -

गँ गणपतये नमः - दक्षिणे,क्षँ क्षेत्रपालाय नमः -वामे,

शँ वसुन्धरायुक्ताय शङ्खनिधये नमः-पुनर्दक्षिणे,

पँ वसुमतियुक्ताय पद्मनिधये नमः - वामे,

मँ मायाशक्तये नमः - दक्षिणे,

चँ चिच्छक्तये नमः - वामे,

गँ गङ्गायै नमः - दक्षिणे, यँ यमुनायै नमः -वामे,

धँ धात्रे नमः - दक्षिणे, वँ विधात्रे नमः -वामे,

दँ देहल्यै नमः - देहल्याम्।

एवं प्रकारेण अन्यान्यपि द्वाराणि सम्पूज्य द्वारपालान् पूजयेत्।

**अथ भूतापसारणम् ।।** यागमण्डपाभ्यन्तरं परितः सिद्धाक्षतान् विकिरेत् -

क्षूँ दारय दारय विघ्नं हूँ फट् ।

ततो भौमविघ्नान् त्रिभिः पादतलाघातैरन्तरिक्षगविघ्नान् पार्ष्णिघातत्रयेण, दिव्यविघ्नानात्मानं शङ्करं ध्यात्वा दिव्यदृष्ट्यावलोकनैर्निवारयेत् । ततो दक्षिणाङ्गं किञ्चित् संकोच्य द्वारस्य वामशाखां स्पृशन् उत्सारितभूतान् निर्गमनार्थं दक्षिणमार्गं ददत् दक्षिणपादपुरस्सरं यागमण्डपे प्रविशेत् । वामाचारिणस्तु वामपादपुरस्सरं यागमण्डपे प्रविशेरन् ।

**अथ वास्तुपुरुषादिपूजनम् ।।** यागमण्डपस्य नैर्ऋत्यां दिशि वास्तुपुरुषं ब्रह्माणञ्च गन्धपुष्पादिभिः पूजयेत् -

वँ वास्तुपुरुषाय नमः - वास्तुपुरुषम् ,

वँ वास्त्वधीशाय ब्रह्मणे नमः -ब्रह्माणम् ।

ततः सामान्यर्घ्यजलेन मण्डपाभ्यन्तरं सम्प्रोक्ष्य स्वोपवेशार्थं त्रिकोणवृत्तचतुरस्रमण्डलं विलिखेत् । तच्च यथा -

ततस्तस्मिन् मण्डले तदधिष्ठातृदेवं कामरूपं गन्धपुष्पादिभिः पूजयेत् -

क्लीं कामरूपाय नमः ।

ततस्तस्मिन्नेव मण्डले आसनमास्तीर्य आसनं यजेत् -

क्लीं आधारशक्त्यै कमलासनाय नमः ।

**अथ विजयाशोधनम् तदर्पणञ्च ।।** प्राङ्मुख उदङ्मुखो वा भूत्वा आसने वीरासनेनोपविश्य अधोलिखितमन्त्रं विजयोपरि सप्तवारं प्रजपेत् -

ह्रीं अमृते अमृतोद्भवे अमृतवर्षिणि अमृतं आकर्षय आकर्षय सिद्धिं देहि कालिकां मे वशमानय स्वाहा ।

एवं प्रजप्य तत्र आवाहनीं, स्थापनीं, सन्निधापनीं, निरोधिनीं, धेनुं, योनिमुद्रां प्रदर्शयेत् ।

ततो गुरुपदिष्टया तत्त्वमुद्रया सहस्रदलचक्रे गुरुं त्रिवारं विजयया तर्पयेत् -

श्रीअमुकानन्दनाथं गुरुं तर्पयामि नमः ।

तत्त्वमुद्रयैव विजयया हृदये त्रिधा तर्पयेत् -

ह्रीं अमुकदेवीं तर्पयामि स्वाहा ।

ततो कुण्डलीमुखे विजयां जुहुयात् -

वद वद वाग्वादिनि मम जिह्वाग्रे स्थिरी भव सर्वसत्त्ववशङ्करी स्वाहा ।

ततो भङ्गां गृहीत्वा गुरुं, गणेशं, देवीं च क्रमेण नमेत् -

श्रीगुरवे नमः - वामकर्णस्योर्ध्वदेशे,

गँ गणेशाय नमः -दक्षिणकर्णस्योर्ध्वदेशे,

ह्रीं सनातन्यै अमुकदेव्यै नमः - ललाटस्य मध्यदेशे ।

**अथ पूजाद्रव्यकुलद्रव्यस्थापनम् ।।** तत्र आत्मनो दक्षिणे पूजाद्रव्याणि वामे च कुलद्रव्याणि

स्थापयित्वा अस्त्रान्तमूलमन्त्रोच्चारणपूर्वकं सामान्यार्घ्योदकेन सर्वद्रव्याणि अभिषिञ्च्य जलधारया वेष्टयेत् । ततो 'रँ' इति वह्निबीजोच्चारणपूर्वकं भावनया पूजाद्रव्याणि परितो वह्नेरावरणं कुर्यात् । ततः करशुद्ध्यर्थं चन्दनसंयुक्तं पुष्पमादाय अस्त्रमन्त्रेण पुष्पं करयो घर्षयित्वा प्रक्षिपेत् ।

**अथ दिग्बन्धनम् ।।** तर्जनीमध्यमाभ्यामङ्गुलीभ्यां वामपाणितले ऊर्ध्वोर्ध्वं तालत्रितयं दत्वा 'फट्' इतिमन्त्रेण अङ्गुलिध्वनिभिर्दिग्बन्धनं कुर्यात् ।

**अथ भूतशुद्धिः ।।** स्वाङ्के करौ उत्तानौ निधाय मूलाधारचक्रे मनो निवेश्य तत्रस्थां कुण्डलिनीं हुङ्कारेण उत्थाप्य हंस मन्त्रेण पृथ्वीतत्त्वयुतां कुण्डलिनीं स्वाधिष्ठानचक्रं समानीय गन्धतन्मात्रेण घ्राणेन्द्रियेण च सहितं पृथ्वीतत्त्वं स्वाधिष्ठानस्थे जलतत्त्वे विलापयेत् । पुनः स्वाधिष्ठानात् कुण्डलिनीं मणिपूरकं समानीय स्वाधिष्ठानस्थं रसतन्मात्रेण जिह्वेन्द्रियेण च युतं जलतत्त्वं मणिपूरकस्थे अग्नितत्त्वे विलापयेत् । ततो मणिपूरकचक्रात् कुण्डलिनीं अनाहतचक्रं समानीय अग्नितत्त्वं वायुतत्त्वे विलापयेत् । कुण्डलिनीं पुनः विशुद्धिचक्रं समानीय वायुतत्त्वं विशुद्धिचक्रस्थे आकाशतत्त्वे विलापयेत् । एवं प्रकारेण कुण्डलिनीं आज्ञाचक्रे ततोऽपि ऊर्ध्वं सहस्रारचक्रे समानयेत् । तत्क्रमे आकाशतत्त्वं अहङ्कारे, अहङ्कारतत्त्वं

महत्तत्त्वे, महत्तत्त्वं प्रकृतौ, प्रकृतिं च ब्रह्माणि विलापयेत्। इत्थं प्रकारेण तत्त्वविलापनं विधाय स्ववामकुक्षौ रक्तश्मश्रुविलोचनं कृष्णवर्णयुतं पापपुरुषं चिन्तयेत् । ततो धूम्रवर्णकं 'यँ' इति वायुबीजं जपन् वामनासारन्ध्रेण षोडशमात्रया वायुं पूरयेत् । पुनः 'यँ'बीजं जपन् चतुषष्ट्या मात्रया कुम्भकं कुर्यात्। तदुत्पन्नेन वायुना पापात्मकं देहं शोषितमिति भावयेत्। ततो नाभौ रक्तवर्णकं 'रँ' इति अग्निबीजं जपन् चतुःषष्ट्या मात्रया कुम्भकेन तं पापपुरुषं दहेत्। ततो ललाटे शुक्लवर्णकं 'वँ' इति जलबीजं सञ्चित्य तज्जपन् द्वात्रिंशता मात्रया रेचकमाध्यमेन 'वँ' इति वरुणबीजाच्युतेन जलेन दग्धां तनूं प्लावयेत् । तदनन्तरं विदेहस्वरूपं नवीनमुत्पन्नं देहं भावयेत् । ततो मूलाधारे पीतवर्णं 'लँ' इति पृथ्वीबीजं चिन्तयन् तेनं बीजेन दिव्यावलोकनेन च स्वदेहं दृढं कुर्यात् । तदनन्तरं हृदये हस्तमादाय तस्मिन् शुद्धदेहे देव्याः प्राणप्रतिष्ठां कुर्यात्-

आँ ह्रीं क्रौं हंस सोऽहम् ।

ततः सततं देवीस्वरूपोऽहमिति चिन्तयेत्।

**अथ न्यासः ।।** तत्र प्रथमं मातृकान्यासं कुर्यात्। तद्यथा -

अस्य श्रीमातृकासरस्वतीमन्त्रस्य ब्रह्मा ऋषिर्गायत्री छन्दो मातृका सरस्वती देवता हलो बीजम् स्वराः शक्तयो विसर्गाः कीलकानि शरीरशुद्धिपुरःसरमभीष्टसिद्धयर्थे लिपिन्यासे विनियोगः ।

ब्रह्मणे ऋषये नमः - शिरसि,
गायत्र्यै छन्दसे नमः -मुखे,
मातृकासरस्वत्यै देवतायै नमः -हृदये,
हल्भ्यो बीजाय नमः - गुह्ये,
स्वरेभ्यः शक्तिभ्यो नमः - पादयोः,
विसर्गेभ्यः कीलकेभ्यो नमः - सर्वाङ्गेषु न्यसेत्

ततः कराङ्गन्यासमाचरेत्। तद्यथा -

अँ कँ खँ गँ घँ ङँ आँ अङ्गुष्ठाभ्यां नमः ।
इँ चँ छँ झँ ञँ ईँ तर्जनीभ्यां स्वाहा।
उँ टँ ठँ डँ ढँ णँ ऊँ मध्यमाभ्यां वषट् ।
एँ तँ थँ दँ धँ नँ ऐँ अनामिकाभ्यां हुँ ।
ओँ पँ फँ बँ भँ मँ औँ कनिष्ठाभ्यां वौषट् ।
अँ यँ रँ लँ वँ शँ षँ सँ हँ क्षँ अँः करतलपृष्ठाभ्यां फट् ।

ततो हृदयाद्यङ्गन्यासं कुर्यात्। तद्यथा -

अँ कँ खँ गँ घँ ङँ आँ हृदयाय नमः,
इँ चँ छँ जँ झँ ञँ ईँ शिरसे स्वाहा,
उँ टँ ठँ डँ ढँ णँ उँ शिखायै वौषट्,
एँ तँ थँ दँ धँ नँ ऐँ कवचाय हुँ,
ओँ पँ फँ बँ भँ मँ औँ नेत्रत्रयाय वौषट्,
अँ यँ रँ लँ वँ शँ षँ सँ हँ क्षँ अँः अस्त्राय फट् ।

ततो मातृसरस्वतीध्यानं कुर्यात् । ध्यानं यथा -

पञ्चाशल्लिपिभिर्विभक्तमुखदोः यन्मध्यवक्षस्थलां ।
भास्वन्मौलिनिबद्धचन्द्रसकलामापीनतुङ्गस्तनीम् ॥
मुद्रामक्षगुणं सुधाढ्यकलशं विद्याञ्च हस्ताम्बुजै-
र्बिभ्राणां विषदप्रभां त्रिनयनां वाग्देवतामाश्रये[२४]॥

एवं मातृसरस्वतीदेवीं ध्यात्वा षट्चक्रेषु मातृकान्यासं कुर्यात् । तच्च यथा -

भ्रूमध्ये आज्ञाख्ये द्विदलयुते चक्रे -हँ नमः, क्षँ नमः,

कण्ठदेशस्थे षोडशदलयुते विशुद्धाख्ये चक्रे - अँ नमः, आँ नमः, इँ नमः, ईँ नमः, उँ नमः, ऊँ नमः, ऋँ नमः, ॠँ नमः, ऌँ नमः, ॡँ नमः, एँ नमः, ऐँ नमः, ओँ नमः, औँ नमः, अँ नमः, अँः नमः,

हृदये अनाहताख्ये द्वादशदलयुते चक्रे - कँ नमः, खँ नमः गँ नमः, घँ नमः, ङँ नमः, चँ नमः, छँ नमः, जँ नमः, झँ नमः, ञँ नमः, टँ नमः, ठँ नमः,

नाभिदेशे मणिपूरकाख्ये दशदलयुते चक्रे - डँ नमः, ढँ नमः, णँ नमः, तँ नमः, थँ नमः, दँ नमः, धँ नमः, नँ नमः, पँ नमः, फँ नमः,

लिङ्गमूले स्वाधिष्ठानाख्ये षड्दलयुते चक्रे - बँ नमः, भँ नमः, मँ नमः,यँ नमः, रँ नमः, लँ नमः,

---

२४ बृहत् पुरश्चर्यार्णवः ( द्वितीयखण्डे ) उद्धृतम्, पृ.१३ ।

कन्ददेशे मूलाधाराख्ये चतुर्दलयुते चक्रे - वँ नमः, शँ नमः, षँ नमः, सँ नम ।

ततो वहिर्मातृकान्यासं[२५] कुर्यात्। तत्र प्रथमं वर्णेश्वरीं ध्यायेत्। तच्च यथा -

अक्षस्रजं हरिणपोतमुदग्रटङ्क-
विद्यां करैरविरतं दधतीं त्रिनेत्राम्।
अर्धेन्दुमौलिमरुणामरविन्दभासां
वर्णेश्वरीं प्रणमतः स्तनभारनम्राम्[२६]॥

एवं ध्यात्वा न्यासमारभेत्। तच्च यथा -

क्षँ नमः - हृदयादिमुखे व्यापकम्,
लँ नमः - हृदयाद्युदरे, हँ नमः - हृदयादिवामपादे,
षँ नमः -हृदयादिवामकरे,शँ नमः - हृदयादिदक्षिणकरे,
वँ नमः - वामांशे, लँ नमः - ककुदि,
रँ नमः - दक्षांशे, यँ नमः - हृदये,
मँ नमः - उदरे, भँ नमः -नाभौ,

---

२५ तत्र वहिर्मातृकान्यासस्त्रिविधः सृष्टिस्थितिसंहारक्रमभेदेन । पूर्वं स्थितिक्रमेण ततः संहारक्रमेण ततः सृष्टिक्रमेण न्यासो ब्रह्मचारिभिः कार्यः। गृहस्थैः प्रथमं संहारक्रमेण ततः सृष्टिक्रमेण ततः स्थितिक्रमेण न्यासः कार्यः। वानप्रस्थसंन्यासादिभिस्तु प्रथमं सृष्टिक्रमेण ततः स्थितिक्रमेण ततः संहारक्रमेण न्यासः कार्यः।

२६ बृहत् पुरश्चर्यार्णवः ( द्वितीयखण्डे ) उद्धृतम्, पृ.१५।

बँ नमः - पृष्ठे, फँ नमः - वामपार्श्वे,

पँ नमः - दक्षपार्श्वे,

नँ नमः -वामपादाङ्गुल्यग्रेषु,

धँ नमः - वामपादाङ्गुलिमूलेषु,

दँ नमः - वामगुल्फे, थँ नमः - वामजानुनि,

तँ नमः - वामपादमूले, णँ नमः - दक्षपादाङ्गुल्यग्रेषु,

ढँ नमः - दक्षपादाङ्गुलिमूलेषु, डँ नमः - दक्षगुल्फे,

ठँ नमः - दक्षजानुनि, टँ नमः - दक्षपादमूले,

ञँ नमः - वामाङ्गुल्यग्रेषु,

झँ नमः - वामाङ्गुलिमूलेषु,

जँ नमः - वाममणिबन्धे, छँ नमः - वामकूर्परे,

चँ नमः - वामबाहुमूले, ङँ नमः - दक्षाङ्गुल्यग्रेषु,

घँ नमः - दक्षाङगुलिमूलेषु, गँ नमः - दक्षमणिबन्धे,

खँ नमः - दक्षकूर्परे, कँ नमः -दक्षबाहुमूले,

अँः नमः - मुखे, अँ नमः -ब्रह्मरन्ध्रे,

औँ नमः - अधोदन्ते, ओँ नमः - ऊर्ध्वदन्ते,

ऐँ नमः - अधरे, एँ नमः - ओष्ठे,

ॡँ नमः -वामगण्डे, लृँ नमः - दक्षगण्डे,

ॠँ नमः -वामनासापुटे, ऋँ नमः - दक्षनासापुटे,

ऊँ नमः - वामकर्णे, उँ नमः - दक्षकर्णे,

ईँ नमः - वामनेत्रे, इँ नमः - दक्षनेत्रे,

आँ नमः - मुखवृत्ते, अँ नमः - ललाटे ।

इति संहारक्रमः ।

अथ सृष्टिक्रमः -

प्रथमं वर्णेश्वरीं ध्यायेत् । तद्यथा -

पञ्चाशल्लिपिभिर्विभक्तमुखदोः यन्मध्यवक्षस्थलाम् ।
भास्वन्मौलिनिबद्धचन्द्रसकलामापीनतुङ्गस्तनीम् ॥
मुद्रामक्षगुणं सुधाढ्यकलशं विद्याञ्च हस्ताम्बुजै-
र्बिभ्राणां विषदप्रभां त्रिनयनां वाग्देवतामाश्रये ॥

एवं ध्यात्वा अँ नमः -ललाटे इत्यादि क्षँ नमः - हृदयादिमुखे व्यापकम् इत्यन्तम् तत्तत्स्थानेषु न्यसेत् । इति सृष्टिक्रमः ।

अथ स्थितिक्रमः -

प्रथमं वर्णेश्वरीं ध्यायेत् । तद्यथा -

सिन्दूरकान्तिममिताभरणां त्रिनेत्रां
विद्याक्षसूत्रमृगपोतवरान् दधानाम् ।
पार्श्वेस्थितां भगवतीमपि काञ्चनाभां
ध्यायेत्कराब्जधृतपुस्तकवर्णमालाम्[२७] ॥

ततो डँ नमः - दक्षगुल्फे इत्यादि क्षँ नमः -हृदयादिमुखे व्यापकम् इत्यन्तम् विन्यस्य पुनः

अँ नमः - ललाटे इत्यादि ठँ नमः - दक्षजानुनि इत्यन्तम् तत्तत्स्थानेषु न्यसेत् । इति स्थितिक्रमः ।

---

२७ पूर्ववत् ।

ततो मूलमन्त्रेण प्राणायामत्रयं कृत्वा पूर्ववत् ऋषिन्यासं, व्यापकन्यासं, कराङ्गन्यासं, षडङ्गन्यासं समाचरेत् । ततः पीठन्यासं कुर्यात् । तद्यथा -

हीँ आधारशक्तये नमः,हीँ कूर्माय नमः,

हीँ शेषाय नमः,हीँ पृथ्व्यै नमः,

हीँ सुधाम्बुधये नमः,हीँ मणिद्वीपाय नमः,

हीँ पारिजाततरवे नमः,हीँ चिन्तामणिगृहाय नमः,

हीँ मणिमाणिक्यवेदिकायां पद्मासनाय नमः- सर्वं हृदि न्यसेत् ।

हीँ धर्माय नमः - दक्षस्कन्धे,

हीँ ज्ञानाय नमः - वामस्कन्धे,

हीँ वैराग्याय नमः -दक्षकट्यां,

हीँ ऐश्वर्याय नमः -वामकट्यां,

हीँ अधर्माय नमः -मुखे,

हीँ अज्ञानाय नमः -वामपार्श्वे,

हीँ अवैराग्याय नमः -दक्षिणपार्श्वे,

हीँ अनैश्वर्याय नमः-नाभौ न्यसेत् ।

हीँ आनन्दकन्दाय नमः,हीँ सूर्याय नमः,

हीँ सोमाय नमः,हीँ अग्नये नमः,

हीँ सत्त्वाय नमः,हीँ रजसे नमः,

हीँ तमसे नमः,हीँ केसरेभ्यो नमः,

ह्रीं कर्णिकायै नमः -सर्वं हृदि न्यसेत् ।

ह्रीं मङ्गलायै नमः -हृत्पद्मस्य पूर्वकेशरे,

ह्रीं विजयायै नमः -हृत्पद्मस्य आग्नेये,

ह्रीं भद्रायै नमः - हृत्पद्मस्य दक्षिणे,

ह्रीं जयन्त्यै नमः -हृत्पद्मस्य नैर्ऋत्ये,

ह्रीं अपराजितायै नमः -हृत्पद्मस्य पश्चिमे,

ह्रीं नन्दिन्यै नमः -हृत्पद्मस्य वायव्ये,

ह्रीं नारसिंह्यै नमः -हृत्पद्मस्य उत्तरे,

ह्रीं वैष्णव्यै नमः -हृत्पद्मस्य ईशाने ।

ततो हृत्पद्मपत्राग्रेषु दक्षिणावर्तक्रमेण अष्टौ भैरवान् न्यसेत् ।

तद्यथा -

अँ असिताङ्गभैरवाय नमः - पूर्वे,

रुँ रुरुभैरवाय नमः -आग्नेये,

चँ चण्डभैरवाय नमः - दक्षिणे,

क्रँ क्रोधभैरवाय नमः -नैर्ऋत्ये,

उँ उन्मत्तभैरवाय नमः -पश्चिमे,

कँ कपालभैरवाय नमः -वायव्ये,

भँ भीषणभैरवाय नमः - उत्तरे,

सँ संहारभैरवाय नमः - ईशाने ।

ततः पीठन्यासं विधाय प्राणायामञ्चरेत् ।

**अथ अन्तर्यजनम् ॥** गुरूपदिष्टया करकच्छपमुद्रया

गन्धपुष्पे समादाय हृदि हस्तौ निधाय स्वेष्टदेवीं ध्यायेत्। ततः करकच्छपमुद्रया गृहीतं पुष्पं स्वशिरसि संस्थाप्य देव्या अन्तर्यजनं कुर्यात्। तद्यथा -

हृत्पद्मं आसनं, सहस्रारच्युतामृतं पाद्यम्, मनस्तु अर्घ्यम्, पुनः सहस्रारच्युतामृतं आचमनीयं स्नानीयम्, आकाशतत्त्वं वसनं, गन्धतत्त्वं गन्धं, चित्तं पुष्पं, प्राणान् धूपं, तेजस्तत्त्वं दीपं, अमृतं नैवेद्यं, अनाहतध्वनिं घण्टां, वायुतत्त्वं चामरं, इन्द्रियकर्माणि मनश्चाञ्चल्यं च नृत्यं प्रकल्पयेत्। एवं अमायं, अनहङ्कारं, अरागं,अमदं, अमोहकं, अद्वेषं, अक्षोभकं, अमात्सर्यं, अलोभं, अहिंसा, इन्द्रियनिग्रहः, दया, क्षमा, ज्ञानमिति पञ्चदशभावरूपैः पुष्पैर्देवीं प्रपूजयेत्। ततोऽमृतं, मांसशैलं, मीनपर्वतम्, मुद्राराशिं, घृताक्तं पायसं, कुलामृतं, कुलपुष्पं, पीठक्षालनवारि च मनसा निवेद्य कामक्रोधौ बलिं दद्यात्।

**अथ आभ्यन्तरजपः ॥** तत्र कुण्डलीरूपेण सूत्रेण ग्रथिता वर्णमयी माला आभ्यन्तरे जपे प्रोक्ता। जपमन्त्रं यथा -

अँ आँ इँ ईँ उँ ऊँ ऋँ ॠँ लृँ ॡँ एँ ऐँ ओँ औँ अँ अँः कँ खँ गँ घँ ङँ चँ छँ जँ झँ ञँ टँ ठँ डँ ढँ णँ तँ थँ दँ धँ नँ पँ फँ बँ भँ मँ यँ रँ लँ वँ शँ षँ सँ हँ क्षँ (अत्र मूलमन्त्रं संयोज्यम्) इति अनुलोमक्रमः।

क्षँ हँ सँ षँ शँ वँ लँ रँ यँ मँ भँ बँ फँ पँ नँ धँ दँ थँ तँ णँ ढँ डँ ठँ टँ ञँ झँ जँ छँ चँ ङँ घँ गँ खँ कँ अँः अँ औँ ओँ ऐँ एँ ॡँ ऌँ ॠँ ऋँ ऊँ उँ ईँ इँ आँ अँ (अत्र मूलमन्त्रं संयोज्यम्) इति विलोमक्रमः ।

एतन्मन्त्रं अष्टोत्तरशतं जप्त्वा तज्जपं देव्या वामकरे समर्प्य साष्टाङ्गं प्रणमेत् ।

**अथ विशेषार्घ्यस्थापनम् ।।** तत्र प्रथममात्मनो वामभागे सामान्यार्घ्यजलेन मण्डलं विलिखेत् । तद्यथा -

ततो गन्धपुष्पादिभिर्मण्डलं पूजयेत् -

ह्रीं आधारशक्तये नमः ।

ततो मण्डलोपरि प्रक्षालिताधारपात्रं संस्थाप्य वह्निमण्डलं सम्पूजयेत् -

मँ वह्निमण्डलाय दशकलात्मने नमः ।

ततो फट् इति मन्त्रेण अर्घ्यपात्रं प्रक्षाल्य आधारोपरि तं स्थापयेत् । ततोऽर्घ्यपात्राधिष्ठातृदैवतं सूर्यमण्डलं पूजयेत् -

अँ सूर्यमण्डलाय द्वादशकलात्मने नमः ।

ततो मूलमन्त्रमुच्चरन् अर्घ्यपात्रस्य त्रिभागं मद्येन तदनुकल्पेन दुग्धेन[२८] वा शेषञ्च तोयेन पूरयेत्। तत अर्घ्यपात्रजले गन्धपुष्पादिभिः सोममण्डलं पूजयेत् -

ऊँ सोममण्डलाय षोडशकलात्मने नमः ।

ततो रक्तचन्दनलिप्तं अक्षतविशिष्टं दुर्वासहितं पुष्पं विल्वपत्रे निधाय विशेषार्घ्यस्य अग्रभागे स्थापयेत्। मूलमन्त्रेण अर्घ्यपात्रे तीर्थान्यावाह्य तत्र देवीं विचिन्त्य गन्धपुष्पादिभिर्विशेषार्घ्यं पूजयित्वा मूलमन्त्रं द्वादशधा जपेत् । विशेषार्घ्यजले धेनुमुद्रां योनिमुद्रां प्रदर्शयेत्, धूपदीपौ च कारयेत् । विशेषार्घ्यजलं प्रोक्षणीपात्रे संस्थाप्य तज्जलेन देयवस्तूनि आत्मानं च सिञ्चेत्।

---

२८ त्रय्यध्वनीनो भूदेवस्त्रिपदायज्ञसूत्रधृक्।
न कदाचित् स्पृशेत् हालां न च देव्यै निवेदयेत्॥
इति महाकालसंहितावचनात् (६। ३८१) द्विजानां कृते साक्षात् मद्यव्यवहारो निषिद्ध इति ज्ञायते । तन्त्रादिशास्त्रेषु मद्यदानस्य यत्फलाधिक्यं श्रूयते तच्छूद्रपरं ज्ञेयं न तु द्विजपरमतो द्विजा मद्यव्यवहारं नैव कुर्यूः। उक्तं हि -
श्रूयते यत्फलाधिक्यं तन्त्रादौ मद्यदानतः ।
तद्धि शूद्रपरं ज्ञेयं नैव द्विजपरं प्रिये॥ (महाकालसंहिता ६।४२०॥)
अतो द्विजा अनुकल्पविधानेन कार्यं कुर्यूः । अनुकल्पव्यवस्था तत्रैव (महाकालसंहिता ६। ४३६-४४०) द्रष्टव्या । सात्त्विकानां कृते तु अनुकल्पोऽपि निषिद्धः। तेषां कृते दुग्धं प्रशस्तम्।

ततो देव्या यन्त्रराजं विलिख्य प्राणप्रतिष्ठापूर्वकं पीठदेवताः सम्पूज्य यन्त्रस्य कर्णिकामध्ये मूलदेवीं प्रपूजयेत् ।

**अथ कलशस्थापनम् ॥** प्रथमं वृत्तमावृतं विन्दुसंयुक्तं षट्कोणगर्भं चतुष्कोणमण्डलमालिखेत् । तच्च यथा–

तस्मिन् मण्डले गन्धपुष्पादिभि आधारदेवतां यजेत् -

हीँ आधारशक्तये नमः ।

ततो 'नमः' इति हृन्मन्त्रेण क्षालिताधारं मण्डलोपरि स्थापयित्वा 'फट्' इत्यस्त्रमन्त्रेण क्षालितं घटं आधारे निवेशयेत् । तत अधोलिखितमन्त्रं जपन् मद्येन तदनुकल्पेन दुग्धेन वा घटं पूरयेत् -

क्षँ हँ सँ षँ शँ वँ लँ रँ यँ मँ भँ बँ फँ पँ नँ धँ दँ थँ तँ णँ ढँ डँ ठँ टँ ञँ झँ जँ छँ चँ ङँ घँ गँ खँ कँ अँः अँ औँ ओँ ऐँ एँ लॄँ लृँ ॠँ ऋँ ऊँ उँ ईँ इँ आँ अँ (अत्र मूलमन्त्रं संयोज्यम्) ।

ततः पूर्ववत् आधारकुम्भतीर्थेषु वह्न्यर्कशशिमण्डलं पूजयेत् । ततो घटं रक्तचन्दनसिन्दूरमाल्यानुलेपनैर्भूषयित्वा पञ्चीकरणमाचरेत् । तच्च यथा -

फट् - कुशेन घटं सन्ताडयेत्,

हूँ - अवगुण्ठनमुद्रया तमवगुण्ठयेत्,

ह्रीं - दिव्यदृष्ट्या तं संवीक्ष्येत्,

नमः -तमभिसिञ्चेत्,

मूलमन्त्रेण घटे त्रिवारं गन्धं दद्यात् ।

**अथ मद्यशोधनम्**[२९] ॥ कलशं प्रणम्य मद्यं तदनुकल्पं वा विशोधयेत् । तद्यथा -

एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम् ।
कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम् ॥१॥
सूर्यमण्डलमध्यस्थे वरुणालयसम्भवे ।
अमाबीजमये देवि शुक्रशापाद्विमुच्यताम् ॥२॥
वेदानां प्रणवो बीजं ब्रह्मानन्दमयं यदि ।
तेन सत्येन वै देवि ब्रह्महत्यां व्यपोहतु ॥३॥

ह्रीं हंसः शुचिसद् वसुरन्तरिक्षसद्धोता वेदिसदतिथिदुरोणसत् ।
नृसद्वरसदृतसद्व्योम सदब्जा गोजा ऋतजा अद्रिजा

---

२९ शूद्रश्चेत् सर्वाणि तत्त्वानि मूलमन्त्रेणैव शोधयेत् । कलशे दुग्धमस्ति चेत् तस्य शोधनं नावश्यकम् ।

ऋतं बृहत् ॥४॥

वाँ वीँ वूँ वैँ वौँ वँः ब्रह्मशापविमोचितायै सुधादेव्यै नमः ॥५॥

काँ कीँ कूँ कौँ कँः श्रीँ ह्रीँ सुधाकृष्णशापं मोचयामृतं स्रावय स्रावय स्वाहा ॥६॥

एभिः षड्भिर्मन्त्रैर्मद्यं तदनुकल्पं वा ब्रह्मशापान्मोचयित्वा तस्मिन् मद्ये तदनुकल्पे वा आनन्दभैरवं, आनन्दभैरवीं च पूजयेत् -

हसक्षमलवरयूँ आनन्दभैरवाय वषट् आनन्दभैरवं पूजयामि - आनन्दभैरवं,

सहक्षमलवरयीँ आनन्दभैरव्यै सुधादेव्यै वौषट् आनन्दभैरवीं पूजयामि -आनन्दभैरवीं पूजयेत् ।

ततो मद्ये तदनुकल्पे वा आनन्दभैरवानन्दभैरव्योः सामरस्यं ध्यात्वा तन्मद्यं तदनुकल्पं वा सामरस्यरूपामृतप्लुतमिति विचिन्त्य मद्ये तदनुकल्पे वा द्वादशवारं मूलमन्त्रं जपेत् । मूलमन्त्रेण मद्ये तदनुकल्पे वा पुष्पाञ्जलिं दत्वा घण्टावादनपूर्वकं तत्र धूपदीपौ च कारयेत् ।

**अथ मांसशोधनम्**[30]॥ तत्र मांसमानीय अग्रे

३० तत्र मांसं कूर्मादिमांसं, छागादिमांसं, तित्तिरिहारीतादिमांसं त्रिविधं प्रोक्तम् । तेषु यदात्मप्रियमस्ति तद् देव्यै अर्पितव्यम् । उक्तं हि -

साधकेच्छा बलवती देये वस्तूनि दैवते ।
यद्यदात्मप्रियं द्रव्यं तत्तदिष्टाय कल्पयेत् ॥

त्रिकोणमण्डलोपरि संस्थाप्य 'फट्' इति मन्त्रेण अभिषिञ्च्य 'यँ रँ' बीजाभ्यां त्रिवारं मन्त्रयेत्। ततो 'हूँ' बीजेन अवगुण्ठनमुद्रया मांसं वेष्टयित्वा 'फट्' इति मन्त्रेण तं संरक्षेत्। धेनुमुद्रया 'वँ' बीजेन मांसममृतीकृत्य अधोलिखितं मन्त्रमुच्चरेत्–

विष्णोर्वक्षसि या देवी या देवी शङ्करस्य च।
मांसं मे पवित्री कुरु तद्विष्णोः परमं पदम्॥

**अथ मीनशोधनम्**[३१]॥ मीनं समानीय अग्रे त्रिकोणमण्डलोपरि संस्थाप्य 'फट्' इति मन्त्रेण अभिषिञ्च्य 'यँ रँ' बीजाभ्यां त्रिवारं मन्त्रयित्वा 'हुँ' बीजेन अवगुण्ठनमुद्रया मीन अवगुण्ठ्य 'फट्' इतिमन्त्रेण संरक्षयित्वा 'वँ' बीजेन धेनुमुद्रया मीनं अमृतीकृत्य अधोलिखितं मन्त्रमुच्चरेत् -

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिबर्धनम्।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्॥

**अथ मुद्राशोधनविधिः**[३२]॥ मुद्रां समानीय पूर्ववत्

---

– महानिर्वाणतन्त्रम् ६।६॥

३१ तत्र शालपाठीनरोहितास्त्रिविधा मत्स्या उत्तमा, कण्टकैर्हीना मध्यमा, बहुकण्टका अधमा प्रोक्ता। उक्तं हि –
उत्तमास्त्रिविधा मत्स्याः शालपाठीनरोहिताः।
मध्यमा कण्टकैर्हीना अधमा बहुकण्टकाः॥
(महानिर्वाणतन्त्रम् ६।८॥)

३२ तत्र मुद्रा त्रिविधा प्रोक्ता। शालितण्डुलसम्भवा श्वेता यवगोधूमजा घृतपक्वा मुद्रा उत्तमा, भ्रष्टधान्यादिसम्भवा

संस्थापनं, अभिषेचनं, अवगुण्ठनं, संरक्षणं, अमृतीकरणं च कृत्वा अधोलिखिताभ्यां मन्त्राभ्यां शोधयेत् -

ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ।

ॐ तद्विप्रासो विपण्यवो जागृवांसः समिन्धते ।
विष्णोर्यत् परमं पदम् ।

**अथ मैथुनतत्त्वशोधनम्**[३३]।। तत्र अधोलिखितमन्त्रमुच्चरन् सुरया तदनुकल्पेन दुग्धेन वा स्वकीयां पत्नीं अभिषिञ्चेत् -

ऐँ क्लीं सौँः त्रिपुरायै नम इमां शक्तिं पवित्रीकुरु मम शक्तिं कुरु स्वाहा ।

**अथ श्रीपात्रस्थापनम् ।।** आत्मनो यन्त्रराजस्य च मध्ये ह्रींबीजगर्भं त्रिकोणं तद्वहिर्वृत्तं तदवहिश्च षट्कोणं ततोऽपि वहिश्चतुरस्रमण्डलमालिखेत् । तच्च यथा -

---

लाजादि मध्यमा, अन्या अधमा । उक्तं हि -
चन्द्रबिम्बनिभं शुभ्रं शालितण्डुलसम्भवम् ।
यवगोधूमजं वाऽपि घृतपक्वं मनोरमम् ॥
मुद्रेयमुत्तमा मध्या भ्रष्टधान्यादिसम्भवा ।
भर्जितान्यन्यबीजानि अधमा परिकीर्तिता ॥
(महानिर्वाणतन्त्रम् ६। ९-१०॥)

३३ मैथुनतत्त्वं स्वकीया धर्मपत्नी स्वयम्भूकुसुमं रक्तचन्दनं वा प्रकीर्तितम् ।

तस्य चतुष्कोणमण्डलस्य चतुर्षु कोणेषु पीठचतुष्टयं पूजयेत् ।
तद्यथा -

पूँ पूर्णगिरिपीठाय नमः - आग्नेयकोणे पूर्णगिरिपीठम्,
उँ उड्डीयानपीठाय नमः -नैऋत्यकोणे उड्डीयानपीठं,
जाँ जालन्धरपीठाय नमः -वायव्यकोणे जालन्धरपीठं,
काँ कामरूपपीठाय नमः - ईशानकोणे कामरूपपीठं पूजयेत् ।

ततः षट्सु कोणेषु षट्कोणाधिष्ठातृदैवतं पूजयेत् -

ह्राँ नमः, ह्रीं नमः, ह्रूँ नमः, ह्रैं नमः,ह्रौं नमः, ह्रँ नमः ।

ततो मण्डले आधारदेवतां पूजयेत् -

ह्रीं आधारशक्तये नमः ।

'नमः' इतिमन्त्रेण क्षालितमाधारं वृत्तमण्डलोपरि संस्थाप्य आधारे वह्ने दशकलाः पूजयेत्।

तद्यथा -

धूँ धूम्रायै नमः - धूम्रां,
अँ अर्चिषे नमः - अर्चिं,
ज्वँ ज्वलिन्यै नमः - ज्वलिनीं,
सूँ सूक्ष्मायै नमः - सूक्ष्मां,
ज्वाँ ज्वालिन्यै नमः - ज्वालिनीं,
विँ विस्फुलिंग्यैः नम - विस्फुलिंगीं,
सुँ सुश्रिये नमः - सुश्रीं,
सुँ सुरूपायै नमः - सुरूपां,
कँ कपिलायै नमः - कपिलां,
हँ हव्यकव्यवहायै नमः - हव्यकव्यवहां पूजयेत्।

तत आधारे वह्निमण्डलमर्चयेत् -

मँ वह्निमण्डलाय दशकलात्मने नमः ।

ततो 'फट्' इति मन्त्रेण अर्घ्यपात्रं विशोध्य आधारे तं स्थापयित्वा तत्र सूर्यस्य दशकलाः प्रपूजयेत्। तच्च यथा -

कँ भँ तपिन्यै नमः - तपिनीं,
खँ बँ तापिन्यै नमः - तापिनीं,
गँ फँ धूम्रायै नमः - धूम्रां,
घँ पँ मरीच्यै नमः - मरीचिं,

ङँ नँ ज्वालिन्यै नमः - ज्वालिनीं,

चँ धँ रुचये नमः - रुचिं,

छँ दँ सुधूम्रायै नमः - सुधूम्रां,

जँ थँ भोगदायै नमः - भोगदां,

झँ तँ विश्वायै नमः - विश्वां,

ञँ णँ बोधिन्यै नमः - बोधिनीं,

टँ ढँ धारिण्यै नमः - धारिणीं,

ठँ डँ क्षमायै नमः - क्षमां पूजयेत्।

ततोऽअर्घ्यपात्रे सूर्यमण्डलं पूजयेत् -

अँ सूर्यमण्डलाय द्वादशकलात्मने नमः।

ततो मूलमन्त्रान्तं विलोममातृकां समुच्चरन् कलशस्थमद्येन तदनुकल्पेन दुग्धेन वा अर्घ्यपात्रस्य (श्रीपात्रस्य) त्रिभागं पूरयेत्। श्रीपात्रस्य शेषं चतुर्थभागं विशेषार्घ्यजलैः पूरयित्वा श्रीपांत्रजले सोमस्य षोडशकलाः पूजयेत्। तद्यथा -

अँ अमृतायै नमः- अमृतां,

आँ मानदायै नमः- मानदां,

इँ पूषायै नमः- पूषां,

ईँ तुष्टये नमः- तुष्टिं,

उँ पुष्टये नमः- पुष्टिं,

ऊँ रतये नमः- रतिं,

ऋँ धृतये नमः- धृतिं,

ॠँ शशिन्यै नमः- शशिनीं,

लृँ चन्द्रिकायै नमः- चन्द्रिकां,

ॡँ कान्तये नमः- कान्तिं,

एँ ज्योत्स्नायै नमः- ज्योत्स्नां,

ऐँ श्रिये नमः- श्रियं,

ओँ प्रीतये नमः- प्रीतिं,

औँ अङ्गदायै नमः- अङ्गदां,

अँ पूर्णायै नमः- पूर्णां,

अँः पूर्णामृतायै नमः - पूर्णामृतां पूजयेत् ।

ततोऽर्घ्यपात्रजले सोममण्डलं यजेत् -

ॐ सोममण्डलाय षोडशकलात्मने नमः ।

ततो दूर्वाक्षतं, रक्तपुष्पं, वर्वरापत्रं, अपराजितपुष्पं च 'ह्रीँ' बीजेन पात्रे प्रक्षिपेत् । तदनन्तरं जले अङ्कुशमुद्रया तीर्थावाहनं, 'हुँ' बीजेन अवगुण्ठनमुद्रया जलावगुण्ठनं, अस्त्रमुद्रया जलरक्षणं, धेनुमुद्रया जलामृतीकरणं, मत्स्यमुद्रया जलाच्छादनं कुर्यात् । ततोऽर्घ्यपात्रे मूलमन्त्रं दशधा प्रजप्य तत्र देवीमावाह्य पुष्पाञ्जलिना इष्टदेवीं पूजयेत् ।

ततोऽधोलिखितैः पञ्चभिर्मन्त्रैः कलशमभिमन्त्रयेत् । तद्यथा -

अखण्डैकरसानन्दाकरे परसुधात्मनि ।

स्वच्छन्दस्फुरणामत्रनिधेहि कुलरूपिणि ॥

अनङ्गस्थामृताकारे शुद्धज्ञानकलेवरे ।

अमृतत्वं निधेह्यस्मिन् वस्तूनि क्लिन्नरूपिणि ॥
तद्रूपेणैकरस्यञ्च कृत्वाऽर्घ्यं तत्स्वरूपिणि ।
भूत्वा कुलामृताकारं मयि विस्फुरणं कुरु ॥
ब्रह्माण्डरससम्भूतमशेषरससम्भवम् ।
आपूरितं महापात्रं पीयूषरसमावह ॥
अहन्तापात्रभरितमिदन्तापरमामृतम् ।
पराहन्तामये वह्नौ होमस्वीकारलक्षणम् ॥

ततः तस्मिन् मद्ये तदनुकल्पे दुग्धे वा भैरवीभैरव्योः सामरस्यं विचिन्त्य कलशं पूजयेत् धूपदीपौ च कारयेत् । तदनन्तरं घटश्रीपात्रयोर्मध्ये क्रमेण गुरुपात्रं, भोगपात्रं, शक्तिपात्रं, योगिनीपात्रं, वीरपात्रं, बलिपात्रं, पाद्यपात्रं, आचमनपात्रञ्च सामान्यार्घ्यविधिना स्थापयेत् । कलशस्थेन मद्येन तदनुकल्पेन दुग्धेन वा तेषां पात्राणां त्रिभागं परिपूर्य माषप्रमाणं शुद्धिखण्डं (मांसखण्डं) पात्रेषु नियोजयेत् । ततः श्रीपात्राच्छुद्धिसंयुतं सुरामृतं तदनुकल्पं दुग्धं वा तत्त्वमुद्रया गृहीत्वा आनन्दभैरवं, आनन्दभैरवीं च तर्पयेत् । तच्च यथा -

हसक्षमलवरयूँ आनन्दभैरवाय वषट् आनन्दभैरवं तर्पयामि नमः - आनन्दभैरवं,
सहक्षमलवरयीं आनन्दभैरव्यै वौषट् आनन्दभैरवीं तर्पयामि स्वाहा - आनन्दभैरवीं तर्पयेत् ।

ततो गुरुपात्रामृतेन सहस्रारचक्रे गुरुं, परमगुरुं, परापरगुरुं,

परमेष्ठीगुरुं तर्पयेत् -

ऐँ सपत्नीकममुकानन्दनाथं श्रीगुरुं तर्पयामि नमः - गुरुं,
ऐँ सपत्नीकममुकानन्दनाथं परमगुरुं तर्पयामि नमः-परमगुरुं,
ऐँ सपत्नीकममुकानन्दनाथं परापरगुरुं तर्पयामि नमः-परापरगुरुं,
ऐँ सपत्नीकममुकानन्दनाथं परमेष्ठीगुरुं तर्पयामि नमः - परमेष्ठीगुरुं तर्पयेत् ।

ततो भोगपात्रामृतेन स्वहृदयाम्भोजे इष्टदेवीं त्रिधा तर्पयेत् -

(अत्र मूलमन्त्रं संयोज्यम्) अमुकदेवीं तर्पयामि स्वाहा ।

ततः शक्तिपात्रामृतैरङ्गदेवता आवरणदेवताश्च तर्पयित्वा योगिनीपात्रस्थामृतेन सायुधां सपरिवारां इष्टदेवीं तर्पयेत् । यथा -

(अत्र मूलमन्त्रं संयोज्यम्) सायुधां सपरिवारां अमुकदेवीं तर्पयामि स्वाहा ।

**अथ वटुकादिभ्यो बलिदानम् ॥** स्ववामभागे चतुष्कोणमण्डलं रचयित्वा तन्मण्डलं सम्पूज्य तस्य चतुर्दिक्षु मध्ये च मद्यमांसादिसहितमन्नं तदनुकल्पयुतमन्नं दध्योदनं वा स्थापयेत् । ततो मण्डलस्य पूर्वभागे वटुकं सम्पूजयेत् -

ऐँ ह्रीँ श्रीँ वँ वटुकाय नमः ।

ततस्तस्मै बलिं दद्यात् । यथा -

एषः सुधाऽमिषान्वितान्नबलिः /
सुधाऽमिषान्वितान्नानुकल्पबलिः / एषः
दध्योदनयुतबलि ऐँ ह्रीँ श्रीँ वँ वटुकाय नमः ।

ततो योगिनीं, क्षेत्रपालं, गणपतिं, सर्वभूतान् सम्पूज्य तेभ्यो बलिं दद्यात् -

याँ योगिनीभ्यः स्वाहा - दक्षिणे,

क्षाँ क्षीँ क्षूँ क्षैँ क्षौँ क्षँः क्षेत्रपालाय नमः - पश्चिमे,

गाँ गीँ गूँ गैँ गौँ गँः गणपतये स्वाहा - उत्तरे,

ह्रीँ श्रीँ सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हूँ फट् स्वाहा - मध्ये

ततो इष्टदेवीं सम्पूज्य तस्यै बलिं दद्यात्। यथा -

गृह्ण देवि महाभागे शिवे कालाग्निरूपिणि।

शुभाशुभफलं व्यक्तं ब्रूहि गृह्ण बलिं तव॥

अन्त्ये (मूलमन्त्रं संयोज्यम्) एष बलिः शिवायै नमः।

**अथ इष्टदेवीपूजनम्॥** चन्दनागुरुकस्तूरिवासितं पुष्पं पाणिभ्यां गृहीत्वा करकच्छपमुद्रया हृदि नीत्वा स्वहृदयाम्भोजे इष्टदेवीं ध्यायन् तां सुषुम्नाब्रह्मवर्त्मना सहस्रारमहाचक्रे नीत्वा सुधापायनेन सानन्दितां कृत्वा दीपाद्दीपान्तरमिव तस्या एव देव्याः सकाशादपरां देवीं बृहन्निश्वासवर्त्मना नासापुटेन वहिरानीय प्रथमं पाणिसंस्थे पुष्पे संस्थाप्य पुनः यन्त्रे स्थापयेत्। ततः कृताञ्जलिपुटो भूत्वा तां प्रार्थयेत्। यथा -

देवेशि भक्तिसुलभे परिवारसमन्विते।

यावत् त्वां पूजयिष्यामि तावत् त्वां सुस्थिरा भव[३४]॥

ततो देवीमावाहयेत् -

---

३४ महाानिर्वाणतन्त्रम्, ६। ६७॥ पृ. १३७।

भो अमुकनाम्नि देवि परिवारादिभिः सह इहागच्छ
इहागच्छ इह तिष्ठ इह तिष्ठ इह सन्निधेहि इह
सन्निरुध्यस्व मम पूजां गृहाण ।

ततो गुरूपदिष्टां लेलिहानमुद्रां प्रदर्शयन् यन्त्रमध्ये देव्याः प्राणान् संस्थापयेत् -

आँ ह्रीं क्रों श्रीं स्वाहा अमुकदेव्याः प्राणा इह प्राणाः
आँ ह्रीं क्रों श्रीं स्वाहा अमुकदेव्या जीव इह स्थित आँ
ह्रीं क्रों श्रीं स्वाहा अमुकदेव्याः सर्वेन्द्रियाणि आँ ह्रीं
क्रों श्रीं स्वाहा अमुकदेव्या वाङ्मनोनयनघ्राणश्रोत्रत्वक्
इहागत्य सुखं चिरन्तिष्ठन्तु स्वाहा -३ ।

ततो मूलमन्त्रेण विशेषार्घ्यजलैर्देवीं त्रिधा अभिषिच्य देव्याः सकलीकरणं कुर्यात् -

हाँ हृदयाय नमः, ह्रीं शिरसे स्वाहा,
हूँ शिखायै वौषट्, हैं कवचाय हुम्,
हौं नेत्रत्रयाय वौषट्, हः अस्त्राय फट् ।

ततः [३५]षोडशोपचारैर्देवीं सम्पूज्य पानं, शुद्धिं, मद्यं तदनुकल्पं

---

३५ आसनं पाद्यमर्घ्यं च तत आचमनीयकम् ।
मधुपर्कं स्नानजलं वस्त्रं भूषणमेव च ॥
गन्धः पुष्पं धूपदीपौ नेत्राञ्जनमतः परम् ।
नैवेद्याचमनीये च प्रदक्षिणनमस्कृतिः ॥
एते षोडश निर्दिष्टाः उपचारा........॥

दुग्धं वा देव्यै निवेदयेत्। एतत्सर्वं मूलमन्त्रेण कुर्यात्।
तदनन्तरमग्रे त्रिकोणमण्डलं चतुष्कोणमण्डलं वा विलिख्य
तन्मण्डलोपरि नैवेद्यं संस्थाप्य -

फट् - प्रोक्षणम्, हूँ - अवगुण्ठनम्,

फट् - रक्षणम्,

धेनुमुद्रया वँ -अमृतीकरणं च कुर्यात्।

ततो मूलमन्त्रेण सप्तधा तन्नैवेद्यमामन्त्र्यार्घ्यजलैर्देव्यै
निवेदयेत् -

(अत्र मूलमन्त्रं संयोज्यम्) एतत् सर्वोपकरणान्वितं
सिद्धान्नमिष्टदेव्यै निवेदयामि शिवे हविरिदं जुषाण ।

ततः प्राणादिमुद्राप्रदर्शनपूर्वकं देवीं हविः प्राशयेत् -

प्राणाय स्वाहा, अपानाय स्वाहा,

समानाय स्वाहा, उदानाय स्वाहा, व्यानाय स्वाहा।

वामहस्तेन देवीं नैवेद्यमुद्रां प्रदर्शयित्वा मूलमन्त्रेण देव्यै कलशं
निवेद्य तस्यै पुनराचमनीयं दद्यात्। ततः श्रीपात्रस्थेन सुरामृतेन
तदनुकल्पेन दुग्धेन वा पूर्ववत् देवीं त्रिधा तर्पयेत्। ततो देव्या
मस्तके, हृदये, आधारदेशे, पादयोः, सर्वाङ्गेषु च मूलमन्त्रेण
पुष्पाञ्जलीं दद्यात्।

**अथ षडङ्गदैवतपूजनम् ।।** देव्या मस्तके, हृदये,
आधारदेशे, पादयोः, सर्वाङ्गेषु च मूलमन्त्रेण पुष्पाञ्जलीं दत्वा

---

(महाकालसंहिता ६।१७१-१७२॥ )

कृताञ्जलिपुटः सन् प्रार्थयेत् -

भो इष्टदेवि ! तवावरणदेवान् पूजयामि नमः ।

ततो यन्त्रे षडङ्गदैवतानि (आवरणदेवान्) पूजयेत् -

ह्राँ नमः - आग्नेये, ह्रीँ नमः - नैऋत्ये,

ह्रूँ नमः - वायव्ये, ह्रैँ नमः - ईशाने,

ह्रौँ नमः - अग्रे, ह्रः नमः - यन्त्रस्य पश्चभागे पूजयेत् ।

**अथ गुरुपङ्क्तिपूजनम् ॥** यन्त्रस्य उत्तरदिशि दक्षिणावर्तक्रमेण -

श्रीगुरवे नमः - गुरुम्,

श्रीपरमगुरवे नमः - परमगुरुम्,

श्री परापरगुरवे नमः - परापरगुरुम्,

श्रीपरमेष्ठिगुरवे नमः - परमेष्ठिगुरुम् यजेत् ।

ततो पूर्वोक्तमन्त्राभ्यामानन्दभैरवमानन्दभैरवीं च तत्त्वमुद्रया शिरसि सन्तर्प्य स्वस्वकल्पोक्तान् दिव्यौघसिद्धौघमानवौघान् गुरून् ब्रह्मरन्ध्रे तत्त्वमुद्रयैव सन्तर्प्य गुरुपात्रामृतेन क्रमेण त्रिवारं गुरुपरमगुरुपरापरगुरुपरमेष्ठिगुरूनपि तर्पयेत् । तद्यथा -

ऐँ सपत्नीकममुकानन्दनाथं श्रीगुरुं तर्पयामि नमः - गुरुम्,

ऐँ सपत्नीकममुकानन्दनाथपरमगुरुं तर्पयामि नमः - परमगुरुम्,

ऐँ सपत्नीकममुकानन्दनाथपरापरगुरुं तर्पयामि नमः - परापरगुरुम्,

ऐँ सपत्नीकममुकानन्दनाथपरमेष्ठिगुरुं तर्पयामि नमः -

परमेष्ठिगुरुम् तर्पयेत् ।

**अथ अष्टनायिकापूजनम् ॥** यन्त्रस्य अष्टदलमध्ये गन्धपुष्पादिभिरष्टनायिकाः पूजयेत् ।

तद्यथा -

मङ्गलायै नमः, विजयायै नमः,
भद्रायै नमः, जयन्त्यै नमः,
अपराजितायै नमः, नन्दिन्यै नमः,
नारसिंह्यै नमः, कौमार्यै नमः ।

**अथ अष्टभैरवपूजनम् ॥** यन्त्रस्य अष्टदलाग्रेषु दक्षिणावर्तक्रमेण गन्धपुष्पादिभिरष्टौ भैरवान् यजेत् । यथा-

ॐ असिताङ्गभैरवाय नमः, ॐ रुरुभैरवाय नमः,
ॐ चण्डभैरवाय नमः, ॐ क्रोधभैरवाय नमः,
ॐ उन्मत्तभैरवाय नमः, ॐ कपालीभैरवाय नमः,
ॐ भीषणभैरवाय नमः, ॐ संहारभैरवाय नमः ।

**अथ दिक्पालपूजनम् ॥** यन्त्रस्य भूपूरान्तरे गन्धपुष्पादिभिरिन्द्रादिदशदिक्पालान् यजेत् ।

यथा -

ॐ इन्द्राय नमः, ॐ अग्नये नमः,
ॐ यमाय नमः, ॐ नैर्ऋतये नमः,
ॐ वरुणाय नमः, ॐ वायवे नमः,
ॐ कुबेराय नमः, ॐ ईशानाय नमः,

ॐ ब्रह्मणे नमः, ॐ अनन्ताय नमः ।

**अथ दिक्पालास्त्रपूजनम् ।।** यन्त्रस्य भूपूराद्बहिर्दिक्पालानामस्त्राणि पूजयेत् । यथा -

ॐ वज्राय नमः, ॐ शक्तये नमः,

ॐ दण्डाय नमः, ॐ खड्गाय नमः,

ॐ पाशाय नमः, ॐ अङ्कुशाय नमः,

ॐ गदायै नमः, ॐ त्रिशूलाय नमः,

ॐ पद्माय नमः, ॐ चक्राय नमः ।

**अथ बलिदानम् ।।** दिक्पालान् तर्पयित्वा सर्वोपचारैर्देवीं सम्पूज्य तस्यै बलिं निवेदयेत् । तत्र सुलक्षणं पशुं देव्या अग्रे संस्थाप्य विशेषार्घ्योदकेन तस्य अभिषेचनं, अमृतीकरणञ्च कुर्यात् -

फट् - अभिषेचनम्,

वँ - धेनुमुद्राप्रदर्शनपूर्वकं अमृतीकरणम् ।

ततो गन्धपुष्पनैवेद्यादिभिः पशुं सम्पूजयेत् -

अमुकपशवे नमः ।

एवं सम्पूज्य पशोर्दक्षिणकर्णे पशुपाशविमोचिनीं गायत्रीं जपेत् । तच्च यथा -

पशुपाशाय विद्महे विश्वकर्मणे धीमहि तन्नो जीवः प्रचोदयात् ।

ततः 'हूँ'बीजेन खड्गं समादाय तं पूजयेत् । यथा -

ॐ वागीश्वरीब्रह्मभ्यां नमः - खड्गाग्रे,

ॐ लक्ष्मीनारायणाभ्यां नमः - खड्गमध्ये,

ॐ उमामहेश्वराभ्यां नमः - खड्गमूले,

ब्रह्मविष्णुशिवशक्तियुताय खड्गाय नमः - खड्गं पूजयेत् ।

ततो बलिदानार्थं संकल्पं कुर्यात् । तद्यथा -

विष्णुः, ॐ विष्णुः, ॐ विष्णुः, ॐ तत्सत्, ॐ तत्सत्, ॐ तत्सत् ॐ अद्य अमुकमासस्य अमुकपक्षे अमुकतिथौ अमुकराशिस्थिते श्रीसूर्ये समस्ताभीप्सितपदार्थसिद्धिकामः अमुकगोत्रः अमुकशर्मा/ वर्मा/ गुप्त/ दासोऽहमिष्टदेवतायै पशुमिमं सम्प्रददे ।

एवं सङ्कल्प्य देवीं भावयन् खड्गेन पशुं हन्यात् ।

ततः कवोष्णरुधिरबलिं वटुकेभ्यो निवेदयेत् -

एषः कवोष्णरुधिरबलि वटुकेभ्यो नमः ।

**अथ होमः॥** तत्र वालुकाभिश्चतुर्हस्तपरिमितं चतुरस्रकं मण्डलं कुर्यात् । ततो मण्डलस्य वीक्षणादिकं कुर्यात् । तच्च यथा -

मूलमन्त्रेण वीक्षणं,

फट् - कुशेन ताडनं,

फट् - कुशेन प्रोक्षणं,

हूँ - अवगुण्ठनम् ।

ततो गन्धपुष्पादिभिः स्थण्डिलं पूजयेत् । यथा -

स्थण्डिलाय नमः ।

ततः स्थण्डिले प्रादेशमिताः प्रागग्रा उदग्राश्च तिस्रस्तिस्रो रेखा विधाय प्रागग्रासु रेखासु गन्धपुष्पादिभिर्विष्णुशिवेन्द्रान्, उदग्रासु च रेखासु ब्रह्मयमचन्द्रान् क्रमेण पूजयेत् । यथा -

ॐ विष्णवे नमः, ॐ शिवाय नमः,

ॐ इन्द्राय नमः - प्रागग्रासु रेखासु पूजयेत् ।

ॐ ब्रह्मणे नमः, ॐ यमाय नमः,

ॐ चन्द्राय नमः -उदग्रासु रेखासु पूजयेत् ।

ततः स्थण्डिलमध्ये मण्डलं कुर्यात् । तद्यथा -

ततो मूलमन्त्रेण पुष्पाञ्जलिना तन्मण्डलं सम्पूज्य प्रणवेन मायाबीजेन वा होमद्रव्याणि च सम्प्रोक्ष्य अष्टदलकमलस्य कर्णिकायां गन्धपुष्पादिभिराधारशक्त्यादीन् पूजयेत् । यथा -

ह्रीँ आधारशक्त्यादिभ्यो नमः ।

ततो मण्डलस्य अग्न्यादिकोणे गन्धपुष्पादिभिर्धर्मज्ञानवैराग्यैश्वर्यान् पूजयेत् । यथा -

ॐ धर्माय नमः - आग्नेये,

ॐ ज्ञानाय नमः - नैऋत्ये,

ॐ वैराग्याय नमः - वायव्ये,

ॐ ऐश्वर्याय नमः - ईशाने।

ततः पूर्वादिदिक्षु अधर्माज्ञानावैराग्यमनैश्वर्यं च यजेत्। यथा -

ॐ अधर्माय नमः - पूर्वे,

ॐ अज्ञानाय नमः - दक्षिणे,

ॐ अवैराग्याय नमः - पश्चिमे,

ॐ अनैश्वर्याय नमः - उत्तरे।

ततो मण्डलमध्ये -

ॐ अनन्ताय नमः - अनन्तम्,

ॐ पद्मकाय नमः - पद्मकम्,

ॐ कलासहिताय सूर्याय नमः - सूर्यमण्डलम्,

ॐ कलासहिताय सोमाय नमः - सोममण्डलं यजेत्।

तत अष्टदलकमलस्य शरेषु क्रमेणैताः प्रपूजयेत् -

ॐ पीतायै नमः - पूर्वे,

ॐ श्वेतायै नमः - आग्नेये,

ॐ अरुणायै नमः - दक्षिणे,

ॐ कृष्णायै नमः - नैऋत्ये,

ॐ धूम्रायै नमः - पश्चिमे।

ॐ तीव्रायै नमः - वायव्ये,

ॐ स्फुलिङ्गिन्यै नमः - उत्तरे,

ॐ रुचिरायै नमः - ईशाने,

ॐ ज्वलिन्यै नमः - मध्ये,

रँ वह्नेरासनाय नमः - मध्ये वह्नेरासनं पूजयेत् ।

ततस्तस्मिन् वह्निपीठे वागीश्वरीब्रह्माणौ ध्यात्वा तौ सम्पूजयेत् । यथा -

ह्रीँ वागीश्वरीब्रह्मभ्यां नमः ।

ततः शरावेण कांस्यपात्रेण वा शुद्धमग्निमानीत्वा मूलमन्त्रेण तस्यवीक्षणं, 'फट्' इति मन्त्रेण तस्यावाहनञ्चरेत् ।

ततो वह्निपीठं पूजयेत् । यथा -

ॐ वह्नेर्योगपीठाय नमः ।

ततो वह्निपीठे पूर्वादिषु चतसृषु दिक्षु वामादिशक्तीः पूजयेत् । यथा -

ॐ वामायै नमः - पूर्वे,

ॐ ज्येष्ठायै नमः - दक्षिणे,

ॐ रौद्रायै नमः - पश्चिमे,

ॐ अम्बायै नमः - उत्तरे ।

ततो गन्धपुष्पादभिः स्थण्डिलं पूजयेत् । यथा -

स्थण्डिलाय नमः ।

ततः स्थण्डिलमध्ये मूलदेवतारूपिणीं वागीश्वरीं ध्यात्वा 'रँ' बीजेन वह्निं उत्थाप्य वह्नितः ज्वलद्वबाहुरूपं कव्यादांशं दक्षिणस्यां दिशि परित्यजेत्-

(अत्र मूलमन्त्रं संयोज्यम्) हुँ फट् कव्यादेभ्यः स्वाहा ।

ततोऽस्त्रमन्त्रेण वह्निं संवीक्ष्य 'हुँ'बीजेन तं वेष्टयेत्। धेनुमुद्रया तममृतीकृत्य हस्ताभ्यां पुनरग्निं उत्थाप्य प्रादक्षिण्यक्रमेण स्थण्डिलोपरि त्रिवारमग्निं भ्रामयन् तञ्चाग्निं शिववीर्यरूपं चिन्तयन् साधको जानुस्पृष्टभूमिः सन् अग्निमात्मनोऽभिमुखीकृत्य स्थण्डिलमध्ये त्रिकोणे स्थापयेत्।

ततो वह्निमूर्तिं, तच्चैतन्यञ्च पूजयेत् -

हीँ वह्निमूर्तये नमः - वह्निमूर्तिं,

रँ वह्निचैतन्याय नमः - वह्निचैतन्यं परिपूजयेत्।

ततो वह्निं प्रज्वालयेत् -

ॐ चित्पिङ्गल हन हन दह दह पच पच सर्वं ज्ञापय ज्ञापय स्वाहा ।

ततः कृताञ्जलिर्भूत्वा अग्निवन्दनं कुर्यात्। तच्च यथा -

अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्।
सुवर्णवर्णममलं समिद्धं सर्वतोमुखम्[३६] ॥

ततः कुशैः स्थण्डिलं छादयित्वा वह्नेर्नामकरणानन्तरं वह्निमर्चयेत्। यथा -

ॐ अमुकनाम वैश्वानर जातवेद इह आवह आवह लोहिताक्ष सर्वकर्माणि साधय स्वाहा।

ततो गन्धपुष्पादिभिर्वह्नेः सप्तजिह्वादिपूजनं कुर्यात् -

---

३६ महानिर्वाणतन्त्रम्, ६।१४३॥, पृ. १५३।

ॐ वह्नेर्हिरण्यादिसप्तजिह्वाभ्यो नमः - वह्नेः सप्तजिह्वा,

ॐ सहस्रार्चिषे हृदयाय नमः- वह्नेर्हृदयं,

ॐ वह्नेः षडङ्गेभ्यो नमः- वह्नेः षडङ्गं,

ॐ वह्निमूर्तिभ्यो नमः - वह्नेरष्टौ मूर्तीन् पूजयेत् ।

ततः

ॐ ब्राह्मयादिभ्योऽष्टशक्तिभ्यो नमः - ब्राह्मयाद्या अष्टौ शक्तीः,

ॐ पद्माद्यष्टनिधिभ्यो नमः - पद्माद्यष्टौ निधीन्,

ॐ इन्द्रादिदिक्पतिभ्यो नमः - इन्द्रादिदिक्पतीन् पूजयेत् ।

ततः प्रादेशपरिमाणकं कुशद्वयं गृहीत्वा घृतमध्ये स्थापयेत् । तदनन्तरं घृतस्य वामभागे इडानाडीं, दक्षिणभागे पिङ्गलानाडीं, मध्ये च सुषुम्णानाडीं ध्यात्वा दक्षिणभागादाज्यं गृहीत्वा आज्यं जुहुयात् -

ॐ अग्नये स्वाहा - अग्नेर्दक्षनेत्रे,

वामभागादाज्यं गृहीत्वा -

ॐ सोमाय स्वाहा - अग्नेर्वामनेत्रे,

मध्यादाज्यं समानीय -

ॐ अग्निसोमाभ्यां स्वाहा - अग्नेर्ललाटे आज्यं जुहुयात् ।

ततः पुनर्दक्षिणतो हृदयमन्त्रेण हविर्गृहीत्वा -

ॐ अग्नये स्विष्टिकृते स्वाहा - अग्निमुखे हविर्जुहुयात् ।

ततो व्याहृत्या होममाचरेत् -

भूः भुवः स्वःस्वाहा ।

ततस्त्रिवारं आहुतिर्दद्यात् -

ॐ वैश्वानर जातवेद इह आवह आवह लोहिताक्ष सर्वकर्माणि साधय स्वाहा-३

ततोऽग्नौ स्वेष्टदेवीं आवाह्य पीठाद्यैः सह तां पूजयित्वा मूलमन्त्रेण पञ्चविंशतिमाहुतीर्हुत्वा वह्न्यात्मनोः स्वेष्टदेवतायाश्चैक्यं भावयन् मूलमन्त्रेणैव एकादशाहुतीर्हुनेत् ।

ततोऽङ्गदेवता उद्दिश्य आहुतीर्हुनेत् -

ॐ अङ्गदेवताभ्यः स्वाहा ।

ततः स्वकाममुद्दिश्य सङ्कल्पं कृत्वा मूलमन्त्रेण तिलाज्यमधुमिश्रितैः पुष्पैर्बिल्वपत्रादिभिर्वा यथाशक्तिर्वह्नौ आहुतिं दद्यात् । अन्ते पूर्णाहुतिं दद्यात् । तदनन्तरं संहारमुद्रया वह्नेर्देवीं समानीय स्वहृदयकमले स्थापयेत् । ततोऽग्निं विसृजेत् -

भो अग्नि क्षमस्व, यथासुखं स्वस्थानं गच्छ ।

ततः पुत्र्यै ब्राह्मणाय वा दक्षिणां दत्वा कृतमिदं होमकर्माच्छिद्रमस्तु इति विचिन्त्य भ्रुवोर्मध्यदेशे तिलकं धारयेत् ।

**अथ मूलमन्त्रजपः॥** गुरुं शिरसि, देवतां हृदयकमले,

मूलविद्यां च रसनायां सञ्चित्य त्रयाणां तेजसा आत्मानमेकीभूतं विचिन्तयेत्। ततोऽधोलिखितं मन्त्रं सप्तधा जपेत् -

हीं अँ आँ इँ ईँ उँ ऊँ ऋँ ॠँ ऌँ ॡँ एँ ऐँ ओँ औँ अँ अँः कँ खँ गँ घँ ङँ चँ छँ जँ झँ ञँ टँ ठँ डँ ढँ णँ तँ थँ दँ धँ नँ पँ फँ बँ भँ मँ यँ रँ लँ वँ शँ षँ सँ हँ क्षँ हीं

(अत्र मूलमन्त्रं संयोज्यम्) ।

ततः साधकः मायाबीजं(हीं) शिरसि मुखे च दशधा, हृदये सप्तधा प्रजप्य प्राणायामं कुर्यात्।

ततो हस्ताभ्यां मालां गृहीत्वा मालां प्रार्थयेत् -

माले माले महाभागे सर्वशक्तिस्वरूपिणि।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव[३७] ॥

ततो मालां सम्पूज्य श्रीपात्रस्थामृतेन मालां त्रिधा सन्तर्पयेत् -

( अत्र मूलमन्त्रं संयोज्यम् ) मालां सन्तर्पयामि स्वाहा ।

ततः साधकोऽष्टोत्तरसहस्रं अष्टोत्तरशतं वा मूलमन्त्रं जपेत्।

ततः पुनः प्राणायामं कृत्वा देव्या वामकरे तेजोरूपं जपफलं समर्प्य देवीं प्रणमेत् -

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देवि त्वत्प्रसादात्महेश्वरि[३८] ॥

ततो देव्याः स्तोत्रं कवचं च पठेत्।

---

३७ पूर्ववत्, ६।१७१॥ पृ. १५३।

३८ पूर्ववत्, ६।१७४॥ पृ. १६०।

**अथ कर्मसमर्पणम् ।।** देवीं प्रदक्षिणां कृत्वा तस्यै विशेषार्घ्यं च दत्वा कर्मसमर्पणं कुर्यात्। तच्च यथा -

इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो
जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा
हस्ताभ्यां पद्भ्यां उदरेण शिश्नया यत् कृतं यत्
स्मृतं तत् सर्वं ब्रह्मार्पणं भवतु मां मदीयं च सकलम्
अमुकदेवीपदाम्भोजे अर्पयामि ॐ तत्सत् ।

ततः कृताञ्जलिर्भूत्वा इष्टदेवीं नमेत् । तदनन्तरं संहार मुद्रया पुष्पमादाय तमाघ्राय स्वहृदि स्थापयेत् । तत ऐशान्यां त्रिकोणमण्डलं कृत्वा तस्मिन् मण्डले निर्माल्यपुष्पवारिणा निर्माल्यवासिनीं देवीं पूजयेत् -

ह्रीँ निर्माल्यवासिन्यै नमः ।

**अथ नैवेद्यग्रहणम् ।।** प्रथमं ब्रह्मविष्णुशिवादिभ्यः सर्वदेवेभ्यो नैवेद्यं दत्वा नैवेद्यग्रहणार्थं स्वीयां शक्तिं स्ववामभागे पृथगासने एकासने वा संस्थाप्य पानार्थं भोजनार्थं च रम्यं पात्रं कुर्यात् । तच्च पात्रं पञ्चतोलकादधिकं त्रितयतोलकात् न्यूनं न प्रकुर्वीत । तत्पात्रं सुवर्णोद्भवं रजतोद्भवं काचजनितं नारिकेलोद्भवं वा भवितव्यम्। तत्पात्रं शुद्धिपात्रस्य दक्षिणदेशे आधारोपरि संस्थाप्य महाप्रसादमानीय स्वयं वा भ्रातृपुत्रैर्वा ज्येष्ठानुक्रमतः पात्रेषु परिवेशयेत्। तदनन्तरं स्वस्वपात्रं समादाय मूलाधारादिजिह्वान्तं व्याप्य स्थितां चैतन्यस्वरूपां कुलकुण्डलिनीं

विभाव्य तन्मुखाम्भोजे मूलमन्त्रं समुच्चरन् परस्परमाज्ञामादाय कुण्डलीमुखे परमामृतं जुहुयात् । ततो निर्माल्यपुष्पं शिरसा विधृत्य यन्त्रलेपं भ्रुवोर्मध्यदेशे धृत्वा यथासुखं भोजनञ्च कृत्वा स्वदैनिककर्मणि प्रवृत्तो भवेत् ।
श्रीदुर्गार्पणमस्तु ।

इति माधवप्रसादलामिछानेविरचितं तन्त्राह्निकम् सम्पूर्णम् ।
२०७० मितविक्रमाब्दे भाद्रशुक्लचतुर्दश्यां बुधवासरे शुभम् ।

आधारग्रन्थाः

१) अक्षमालातन्त्र
२) आगमरहस्यः
३) बृहत् पुरश्चयार्णवः
४) महाकालसंहिता
५) महानिर्वाणतन्त्रम्
६) मेरुतन्त्रम्

**ग्रन्थकारः**

जन्मदिनाङ्काः : वि. सं. २०३०।०८।०९

जन्मस्थानम् : दुईपीपल-३, नवक्वट्टः (नुवाकोट)

सम्प्रतिः : गोठाटार-१, काष्ठमण्डपः

शिक्षा : आचार्यः (तन्त्रम्), एम्.ए.(नेपाली), बी.एड् (नेपाली)

प्रकाशिता ग्रन्थाः : प्राथमिककालीन नेपाली भक्तिकाव्यको अध्ययन, वि.सं.२०६२
(सहसम्पा.) सप्तशती चण्डी (नवमीसिंह-परिमार्जिता सप्तशतश्लोकसुसङ्ख्यका, तेनैव विरचिता चण्डीभक्तिविनोदिनीयुता), वि.सं. २०७०

संलग्नता : उपप्राध्यापकः,नेपाल-संस्कृत-विश्वविद्यालयः,वाल्मीकि विद्यापीठम्, प्रदर्शनीमार्गः, काष्ठमण्डपः।



प्रकाशकः

लम्बकर्ण भट्ट तन्त्रविद्या संस्था

काष्ठमण्डपः